**Sanskrit College, Tiruvadi.**
**Fellows' Theses Series No. 1.**

तञ्जापुरान्तर्गत-श्रीमत्पञ्चनदस्थ-संस्कृतमहाकलाशाला-
प्रधानमीमांसकेन
श्रीशैलताताचार्यशिरोमणिना
कृतः

# मीमांसाऽभ्युदयः ।

# MĪMĀMSĀBHYUDAYA.

A Thesis on Mīmāmsā,

By

**D. T. Tatacharya Siromani,**
Holder of Certificate of Proficiency in Oriental Learning; Senior Professor of Mimamsa, Lecturer in Skt Lit., and Late Fellowship holder, Sanskrit College, Tiruvadi;
Author of Mīmāmsā Paribhāshā Parishkāra, Aksharārtha, Kapinām ...vāsa, Mugdhānjali etc.



*Under the Authority of ...strict Board, Tanjore.*

Printed by
**R. Gururajachariar**
SRI GOPALA VILASA PRESS,
KUMBAKONAM.

**1925.** Price Re 3 0

Fellows' Theses Series No. 1.

तञ्जापुरान्तर्गत-श्रीमत्पञ्चनदस्थ संस्कृतमहाकलाशाला-
प्रधानमीमांसकेन
श्रीशैलताताचार्यशिरोमणिना
कृतः

# मीमांसाऽभ्युदयः ।

# MĪMĀMSĀBHYUDAYA.

A Thesis on Mīmāmsā.

By

**D. T. Tatacharya Siromani,**

Holder of Certificate of Proficiency in Oriental Learning; Senior Professor of Mimamsa, Lecturer in Skt Lit., and Late Fellowship holder, Sanskrit College, Tiruvadi; Author of Mīmāmsā Paribhāshā Parishkāra, Aksharārtha, Kapinām Upavāsa, Mugdhānjali etc.

*Published Under the Authority of The District Board, Tanjore.*

Printed by
**R. Gururajachariar**
SRI GOPALA VILASA PRESS,
KUMBAKONAM.

**1925.**

# ॥ विषयसूची ॥

# शोधनिका ।

ग्रन्थानां मुद्रणावसरे समापतन्त्योऽशुद्धयः परममायाविन्यो मे भान्ति यस्मादत्यन्तं जागरूकैरन्विष्यमाणा अपि तदानीं क्वापि तिरोभवन्त्यो न चक्षुषि पतन्ति अवसिते च शोधनावसरे यत्रैव चिरमन्विष्टं तत्रैव सुस्पष्टमात्मानं प्रकाशयन्ति । अपिचैता नान्यं तथा वंचयन्ति यथा ग्रन्थकारमेव शोधनाय प्रवृत्तम् ।

सत्यस्मिन् साधारणकारणे नगरान्तरस्थो मुद्रणालय इतीदमपरं कारणं यदत्र बह्व्योऽशुद्धयो भवन्ति । सम्यक् शोधयित्वा प्रेषितायामपि हि निरूपणपत्रिकायां ( proof-sheet ) चरममुद्रणाय सङ्घट्यमानास्वक्षरपङ्क्तिषु कानिचिदक्षराणि गलितानि भवन्ति कानिचिच्च विपर्यस्तानि भवन्ति । न च तानि दूरे स्थितेन सद्यो दृष्ट्वा शोधयितुं शक्यन्ते । तस्मादाङ्गलमुद्रणवदत्यन्तशुद्धिसम्पादनाय कृतेऽपि महति यत्न इदं शोधनपत्रघटनमत्रापरिहार्यमासीदिति सखेदं निवेद्यते ।

| पृष्ठसङ्ख्या | पङ्क्तिसङ्ख्या | 6 14 of, इत्यत्र | | of | इति भाव्यम् |
|---|---|---|---|---|---|
| च | १२ | एल्. के. | ,, | के. एल् | ,, ,, |
| ,, | २२ | दर्शयेयूः | ,, | दर्शयेयुः | ,, ,, |
| झ | ११ | एतदादिविमर्श | ,, | एतदादि विमर्श | ,, ,, |
| ठ | २ | यद्यपी | ,, | यद्यपि | ,, ,, |
| ९ | ६ | अयवा | ,, | अथवा | ,, ,, |
| ,, | २२ | द्रुलनाय | ,, | द्रूलनाय | ,, ,, |

| | | | | | | |
|---|---|---|---|---|---|---|
| ६ | २२ | भय | ,, | भूय | ,, | ,, |
| २५ | ९ | जैमिनिरासेति । | ,, | जैमिनिरासेति[1] । | ,, | ,, |
| ,, | २० | अवगम्यते । | ,, | अवगम्यते[4] । | ,, | ,, |
| २६ | १९ | सद्गुरु | ,, | षड्गुरु | ,, | ,, |
| २८ | १ | निधिरितो | ,, | निर्धारितो | ,, | ,, |
| ,, | २० | मन्यते- | ,, | मन्यते । | ,, | ,, |
| ३० | २२ | सन्दिहेत | ,, | सन्दिहीत | ,, | ,, |
| ३६ | २२ | षष्टे | ,, | षष्ठे | ,, | ,, |
| ३७ | ९ | शवैदिक | ,, | शावैदिक | ,, | ,, |
| ३८ | १३ | कुत्र चित्तं | ,, | कुत्रचित् तं | , | ,, |
| ४० | ३ | रूपान्तर | ,, | रूपान्तरं | ,, | ,, |
| ,, | ५ | ऽभि | ,, | ऽभि- | ,, | ,, |
| ४३ | ८ | भाट्ट | ,, | भाट्ट- | ,, | ,, |
| ४८ | ६ | तिष्ठासाम: | ,, | तिष्ठासाम: | ,, | ,, |
| ,, | ८ | कौमुदीकर: | ,, | कौमुदीकार: | ,, | ,, |
| ,, | १० | उपकम्य | ,, | उपक्रम्य | ,, | ,, |
| 48/2 | ११ | युधानामा | ,, | युधनामा | ,, | ,, |
| ४९ | १४ | माहाशाला | ,, | महाशाला | ,, | ,, |
| ६२ | १८ | सङ्गरिति | ,, | सङ्गतिरिति | ,, | ,, |
| ६३ | २ | षष्ठे- | ,, | षष्ठ | ,, | ,, |
| ६५ | १७ | संहित: | ,, | संहित: | ,, | ,, |
| ६६ | १४ | म तं | ,, | मतं | ,, | ,, |

| | | | | | |
|---|---|---|---|---|---|
| ६७ | ५ | पुरुषारुथाः | ,, पुरुषारुयाः | ,, | ,, |
| ६९ | १ | सामान्यतो | ,, सामान्यतो- | ,, | ,, |
| ,, | १८ | विवेचन | ,, विंवेचन | ,, | ,, |
| ,, | १९ | वदन्ति । वेदस्य | ,, वदन्ति वेदस्य | ,, | ,, |
| ७० | ५ | तद्धा | ,, तद्धा- | ,, | ,, |
| ,, | १८ | चस्खाल | ,, चस्खाल[2] | ,, | , |
| ,, | २१ | मस्तीति | ,, मस्तीति[3] | ,, | ,, |
| ७१ | ७ | कृत्स्नस्य | ,, कृत्स्नस्य | ,, | ,, |
| ,, | ,, | पौरुयत्वे | ,, पौरुषेयत्वे | ,, | ,, |
| ७२ | १० | अथ | ,, अत्र | ,, | ,, |
| ,, | ,, | परन्तु | ,, 'परन्तु | ,, | ,, |
| ७६ | १७ | ताप्रप | ,, तामप | ,, | ,, |
| ,, | २० | शब्द | ,, शब्दः' | ,, | ,, |
| ७८ | २० | मुन्पन्न | ,, मुत्पन्न | ,, | ,, |
| ,, | २२ | मेवाज्ञा | ,, मेवाज्ञा- | ,, | ,, |
| ८० | ८ | सङ्गात | ,, सङ्घात | ,, | ,, |
| ०८ | १८ | स्मृतिः | ,, स्मृतिः | ,, | ,, |
| १०१ | १७ | सम्बन्धः | ,, सम्बन्धः ।' | ,, | ,, |
| ,, | २१ | 'पृथि | ,, 'द्रव्याणि पृथि | ,, | ,, |
| ,, | २२ | एकादश | ,, एकादश । | ,, | ,, |
| १०४ | १४ | भाष्य | ,, भाष्य- | ,, | ,, |
| १०९ | १ | कस्यै | ,, कस्ये | ,, | ,, |

| | | | | | | |
|---|---|---|---|---|---|---|
| ११० | १६ | भाट्टा-ऊचुः | ,, | भाट्टा ऊचुः- | ,, | ,, |
| ११५ | २२ | नत्वकार्यं | ,, | नत्वकार्य | ,, | ,, |
| ११७ | ६ | तत्तापर्य | ,, | तत्तात्पर्य | ,, | ,, |
| ११९ | १४ | लिङ्ादि | ,, | लिङादि | ,, | ,, |
| ,, | १९ | इश्वर् | ,, | ईश्वर | ,, | ,, |
| ,, | २२ | तदाच | ,, | तथाच | ,, | ,, |
| १२० | १ | तम् । | ,, | तं आचार्यचोदितः करोमीति हि दृश्यत इति । | ,, | ,, |
| ,, | ७ | मन्त्रार्थ | ,, | मन्त्रार्थ | ,, | ,, |
| ,, | १३ | तत्याद्यनु | ,, | स्तुत्याद्यनु | ,, | ,, |
| १२४ | ९ | ग्रन्थो | ,, | ग्रन्थो | ,, | ,, |
| १२६ | १२ | करणाणि | ,, | करणानि | ,, | ,, |
| (२) | १२ | दर्शनां | ,, | दर्शना | ,, | ,, |
| (३) | ४ | योऽषि | ,, | योऽपि | ,, | ,, |
| ,, | ६ | त्वद्धृदये | ,, | त्वद्धृदये | ,, | ,, |
| (६) | २१ | ऋ. प्रति | ,, | ऋ. प्राति | ,, | ,, |
| (२६) | १९ | ममुपगन्त | ,, | मभ्युपगन्त | ,, | ,, |
| (४१) | १५ | प्रतापरुद्रीयो | ,, | एकावळ्यु | ,, | ,, |
| (४४) | १ | द्वो पक्षा | ,, | द्वौ पक्षौ | ,, | ,, |
| (४७) | १९ | कीत् | ,, | कीत्- | ,, | ,, |
| (४८) | १८ | लिङ्वत्ति | ,, | लिङ्वृत्ति | ,, | ,, |

| | | | | | |
|---|---|---|---|---|---|
| (४९) | ६ आन्वीक्षकी | ,, | आन्वीक्षिकी | ,, | ,, |
| (९३) | ४ प्रतित | ,, | प्रतीत | ,, | ,, |
| ,, | ९ पोक्षित | ,, | पेक्षित | ,, | ,, |
| (९४) | १७ दुनिर्णीतं | ,, | दुर्निर्णीतं | ,, | ,, |
| (९७) | २ मेय | ,, | मेव | ,, | ,, |
| (५९) | १७ प्रह्यि | ,, | प्रह्यि | ,, | ,, |
| (६१) | २२ तनोवा | ,, | तेनावा- | ,, | ,, |
| (६२) | १८ तद्व्याख्यातं | ,, | तद्व्याख्यातम्' | ,, | ,, |

# PREFACE.

When I was thinking over where to add the one or two points which came to my mind after the completion of the body of the thesis with its *anubandha* and *prastavana* I came by the Karma Mimamsa of A. B. Keith, and it was after a perusal of it that I wrote an *anubandha parisishta.* Not a few of the Mimamsa subjects has Keith misunderstood and misstated in his Karma Mimamsa. Some of them, which I thought such Mimamsa pandits also as are ignorant of English should take care to know, have been pointed out in the *anubandha parisishta.* Some more of them I wish to point out here in English, (though originally I had no idea of writing anything in that language,) so that scholars that wish to study Mimamsa but have to satisfy themselves with a second hand knowledge of it may not be misguided. When, in the preparation of this thesis and for the purpose of some *Dharmasastra* class work, I looked into the Tagore's Law lectures of K. L. Sarkar, I feared much that many a scholar would surely be misled by it, and I see now my fear is fully justified. Unless all, which is by no means a little, that is explained in these lectures quite contrary to the *Mimamsa siddhantas,* is refuted and corrected, who knows to what an extent it will mislead scholars. Perhaps, Ramakrishna the author of *Purvamimamsadhikarana-kowmudi* is more to be condemned whom, it seems, K. L. Sarkar has consulted

most when preparing his lectures. In case chronological facts would not go against me, I am inclined to think that this was the *Mimamsaka* from whom *Gadadhara*, the greatest *navya naiyayika*, acquired such a knowledge of *Mimamsa* which led him to interpret the word 'Upasat', which is the name of certain offerings to be performed in the *soma yagas*, as meaning § *charu* made of sesame seeds and paddy.

I am quite unable to understand, what this Ramakrishna had in his mind as his aim in writing this work of such a big name as *Purvamimamsa-adhikarna-kowmudi*. It is not a *Mimamsa* work; it is not a *Smriti* work. If permitted I would like to say that there can be no more absurd thing in the whole world of literature than the *Adhikarana-kowmudi* of Ramakrishna in Sanskrit, and the Law Lectures of K. L. Sarkar in English.

I have shown in these pages that even Max Muller was not able to find out the true significance of a certain passage of Kumarila (see page ७०) and that Colebrooke misunderstood *Venkatadriyajvan*, the name of the elder brother of *Somanatha*, as meaning a priest in the Tiru-

---

§ उपसत् कल्प्यते यत्र सतिलैर्व्रीहिभिश्चरुः । तथाच सतिलैर्व्रीहिभिश्चरित्वा—चरुं कृत्वा (?)

पूर्वमीमांसाधिकरणकौमुदी १४ पु.

सतिलव्रीहिचरुरूपद्रव्यस्य; उपसच्चरुकरणकत्वविशिष्टहोमे;

निर्णयसागर व्युत्पत्तिवादे—१४९ पु.

pati Hills * temple (see page ५२). One can readily pardon these foreign scholars since it is but natural that those who are not familiar with the proper names and customs of India, err in such matters. But there can be little or no excuse for Indians like K. L. Sarkar who takes the word *Bhattapāda* the well-known name of honour, of Kumarila to mean his *Kārikās* (see here page 39).

Now it seems that we need not take notice of all these inaccuracies for, what serious harm will there be if a certain proper name is mistaken so as to mean this or that. We may even overlook, without any practical evil, a Louis H. Grey who makes bold to translate an opening ‡ *sloka* in *Vāsavadattā*, which means

---

* Noting this, Burnell says in his catalogue of Tanjore Palace Library, "Colebrooke has singularly misunderstood this name and translated it. It is a very common one among the South Indian Vaishnavas." I may point out here that this is not a common name among Vaishnavas only, though the author of *Viśvaguṇadarśa* who is a Vaishnava, is most known amidst the literary circle, to be of this name. Evidently *Somanātha* is not a Vaishnava and so his brother cannot be so.

‡ खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु गोपेषु हसन् हरिर्जयति ॥

Victorious is Hari who, when the shepherds said "Weary art thou; leave the mountain off; we will bear it." loosened his arm—with which, the *Bhagavata purana* tells us, he lifted and held up for days the mountain named *Govardhana* in order to keep the *Gokula* safe from the heavy and continuous rainfall caused by Indra for avenging himself upon Krishna (Hari) who prevented his *puja* (worship) on behalf of the mountain *Govardhana*, which Krishna preached to the shepherds, was their God, not Indra— and who, when their arms were bent with the burden (of the mountain) and so were not to the purpose, laughs-
into

Victorious, too, is Hari, resting now,
The while he smileth on the shepherd lads
Whose upraised arms bend neath the awful weight
Of their vast burden; yet cry unto him:
'Ah, weary art thou, let the mountain be;
We will sustain it, Krishna, lord of all!'

But in the case of *Sastras* in general and of *Mimamsa* in particular every point is to be considered seriously; for it is according to the principles of these *sastras* that we are to interpret our laws and *Dharmas*. It is a great pity that *Mimamsa* is the most neglected of all the *Sastras*, though it is the most useful in interpreting our ancient *Sruti* and *Smriti* texts. All the old Indian writers

of repute show in their works full mastery over the Mimamsa Sastra and the want of such mastery is, I think, the chief cause that pandits nowadays do not grow to such an eminence as those of old. It is a small consolation now, however, to see that interest is taken by many a scholar in *Mimamsa* as well as in the other *Sastras.* But the consolation passes away when we see scholars misunderstanding and misrepresenting the principles and the facts of the *Sastra.* Even Dr. Ganganath Jha is not free from error. Let me say a few words in this connection.

'Rk Yajus and Sama are' not 'the subdivisions of the two divisions of the Veda'–Mantra and Brahmana–as Dr. Jha thinks (Sloka Vartika Translation p ii); but of the one division only, that is Mantra. Sometimes these terms are used to denote the whole of the respective Vedas. But it is only by *lakshana.* This is shown in the *Upakramaprabalyadhikarana* (3-3-1).

The word *sama* primarily means, according to Jaimini, singing only; not the verse or the text that is sung (S. V. T. ii)-गीतिषु सामाख्या. In order to establish this fact Jaimini allots a full *adhikarana* of not a few sutras, or we may say, a full *pada,* for there is only one *adhikarana* in that *pada* (7. 2).

Again the first sutra of the Purva Mimamsa does

whom of course Keith follows (K. M. 4). Nowhere v can find a single *sūtra* for two *adhikaraṇas*. Certain there is many a *sūtra* which is interpreted so as to ha reference to many subjects in no way connected wi each other. Such interpretations and discussions a called not *adhikaranas*, but *varṇakas*—expositions—a in the first *adhikaraṇa* of the fourth *adhyāya*.

Nor this sūtra treats of the subject 'Is a study of th Veda necessary for the three upper castes ?' The princi pal subject in this *adhikaraṇa* is the *Mīmāṁsā śāstr* itself. The doubt raised is whether the *śāstra* i necessary and should be begun or not. In orde to determine this we have to inquire into another thing Is it necessary to acquire a full and correct knowledge of *Dharma* which is *Vedārtha*, the meaning of Veda ? Fo determining this too we should first know what the result is for which we are bidden by the Vedic injunctior स्वाध्यायोऽध्येतव्यः to do *Vedādhyayana*. Does it bid us perform *Vedādhyayana* for mere *adrishta* (invisible object) or for getting full knowledge of what is inculcated in the Swādhyāya, Veda.

If this injunction requires us to perform *adhyayana* for the purpose of getting full knowedge of the meaning of *Swādhyāya*, then after the whole Veda text is got by heart, Dharma, which is the meaning of it, should be so studied as will not be doubted again as to its form, nature, performance and the like. If on the other hand

this injunction is to tell us that the *Veda* should be studied for getting only an invisible reward-*adrishta*-we need not inquire into its meaning- Dharma- and consequently the *Mimamsa sastra* which is a collection of the rules of interpretation of the *Vedas*, will be quite unnecessary for which reason it need not be begun at all. Such dependence of the discussion of the principal subject upon the discussion of a subsidiary one is spoken of in many old works as *Phala-Phali-bhava*.

Now the *purvapakshi* says:—

The reward of *Vedadhyayana* meant in the above injunction is only *adrishta* not the knowledge of the *Vedartha*, for, if one, after having mastered the whole text of *swadhyaya* (his branch of Veda) will remain in his *guru's* house to study the meaning thereof, certainly he offends the *smriti* injunction—अधीत्य स्नायात् (having obtained his *sakha* from his *guru* one should bathe). If thus by mere possession of the Veda without the sense, the aforesaid injunction is fully obeyed and carried out nobody is required to study its meaning, and if so it is plain that the *Mimamsa sastra* is quite useless wherefore it need not be begun at all.

Then comes the *siddhanti* who replies thus:—

Nowhere we are to have recourse to *adrishta* if we

should be the knowledge of the meaning of swadhyaya, not adrishta. Nor is there any offence committed to the said *smriti* injunction if one remains in his *gurukula* for studying *Vedartha* ; for it says only " one should bathe after, not immediately after, *Vedadhyayana* ". If so it follows that in order to obtain full and defenite knowledge of Dharma, one should know what are the rules that he should follow in interpreting the texts of *Vedas*, and that the *Mimamsa sastra* wherein such rules are fully explained should be necessarily begun.

One of the many difficult points of *Mimamsa* seems to be that of *bhavana*. For no scholar that speaks of *Mimamsa*, is able to give a clear idea of it. Dr. Ganganathjha too, in his rendering of the *Mimamsa Paribhasha* of Krishnayajvan (S. V. T. XII–XLII) did not explain *bhavana* well. As to the twofold *bhavana* and connected topics see my two commentaries on the *Mimamsa Paribhasha* and also here page (४८).

Such being the case with Dr. Jha, it is no wonder that we see mistakes in the works of scholars such as A. B. Keith. This scholar writes (K. M. 92), 'He only may perform the *Visvajit* (VI, 7) who can afford a fee of 1,200 gold pieces'. The *sruti* text which fixes the fee and is meant here is quoted in the works of *Mimamsa* as found in the *Jyotishtoma prakarana* (context) and it is this:—

गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा ।

Here in this sentence द्वादशशतं means 112 not 1200. For this number we should have to say in Sanskrit either the two separate words द्वादश शतानि or the one compound word द्वादशशती. And further, this number 112 is not of 'gold pieces' since there is no word in the sentence to that sense. There is a big *adhikaraṇa* in *Mīmāmsā* (X, 3, 11,) in which the conclusion arrived at is that the number goes with गौश्च (cow); not any other thing mentioned in the sentence.

Speaking of *Mantra* Keith says (K. M. 81) 'the Yajus is usually held to be unmetrical, though with small accuracy'. I cannot know what induced him to add this remark. There is no shadow of any inaccuracy here. There are *mantras*, it is true, in the *Yajurvēda*, which are metrical and therefore *rks*; but they are in no way Yajus though found in that Veda. Those *mantras* only which are unmetrical are *Yajus* proper and as the *Yajurmantras* are by far more than the *rk* ones in it, the *Vēda* is called *Yajurvēda*.

*Atidēṣa*, transference of subsidaries, is of three kinds:—by express injunction ( प्रत्यक्षवचन ); by name ( नामधेय ); or by inferred injunction ( कल्पितवचन ); (see here page ८१). The transference of subsidaries from the *Syēṇa* to the *Ishu* offering belongs to the first kind as there is an

express injunction found in the context of *Ishu*—समानमितरच्छ्येनेन. This is said by Keith 'Transfer takes place by express injunction as in the case of the *Ishu* offering'. (K. M. 94). But I cannot understand him when he says (a few lines before in the same page) 'It is regulated by context (*prakarana*) or position; thus the *Ishu* offering follows the *Syena* model, because they are enjoined in the same context'. It seems that Keith when, in consulting books, finds a few lines bearing upon a particular subject takes them by themselves without any thought of what is said in other places regarding the same subject. *Prakarana* has nothing to do with *atidesa* not to speak of position. Nor the two offerings, *Syena* and *Ishu* are, or can be, enjoined in the same context.

Interpreting the *smriti* injunction पञ्च पञ्चनखा भक्ष्याः, which is very often quoted as an instance of प्राप्तपरिसङ्ख्या, Keith writes (K. M. 93) "thus the injunction "Five animals among animals with five nails may be eaten", precludes the eating of any animals not having that adornment". The mistake is, I think, too plain to require any explanation. The injunction really means that among the animals with five nails *any other* than the five (see *Yāngyavalkya* 1. 177) must not be eaten. Here by *any other* is meant any other five-naild animal; not any animal "not having that adornment". With such animals this injunction has nothing to do.

Again, though he has not incorrectly pointed out in one place what a *niyama vidhi* is, yet in another place, following, it seems, K. L. Sarkar, Keith says "The

distinction between injunction proper and a restrictive injunction (*niyama*) is applied in the sense that the latter is reduced to nothing more than a maxim or rule, which ought to be regarded, but which, if violated, does not render the action affected invalid ; thus Manu's rule as to marrying an amiable and healthy girl is not an injunction the violation of which renders void the marriage, but a counsel of prudence" (K. M. 98).

There is divergence of opinion among the commentators as to whether the Manu text meant here is or is not an injunction. But it is to be strictly understood that in case it is an injunction it should be taken as much authoritative as any other injunction proper ; that is, its violation is sure to result in heavenly punishment though it does not render the marriage void. But in case it is not an injunction it may be "counsel of prudence" or anything else. The point to be noted is that any kind of injunction, proper restrictive or prohibitive, cannot be "a counsel of prudence".

It seems that these scholars fail to distinguish between *niyama* and *parisankhya vidhi* inasmuch as they are both in the end prohibitive: and therefore it is that they begin to reduce a *niyama* vidhi "to nothing more than a counsel of prudence". The difference between these two *vidhis* is this. A *niyama vidhi* compels, while a *parisankhya vidhi* forbids, us to do this or that. To explain it, we commit an offence to a *niyama vidhi* when we do not perform what is inculcated therein but we do so to a *parisankhya vidhi* when we do what is prohibi-

Though the instance given in the Mīmāmsā works of *niyama*, व्रीहीनवहन्ति, which implies the prohibition of all the other means of unhusking than threshing, has the colour of *parisankhyā*——it may be noted here by the way that to a *vaiyākarna*, *niyama* is the same as *parisankhyā*——the difference may be well illustrated by the *Dharma sūtra* ऋतावुपेयात्. If a *niyama*, the *vidhi* amounts to ऋतावुपेयादेव. If, on the other hand, a *parisankhyā*, to ऋतावेवोपेयात्. According to *sāstraic* authors this difference may be shortly explained thus: *niyama* is अयोगव्यवच्छेद while *parisankhyā* is अन्ययोगव्यवच्छेद. (for further explanation, see my *Aksharārtha*).

Unpleasant as the task of censuring is I was forced to say so much, so that scholars will be aware of the danger of following unscrupulously such works on *Mimamsa* as the Karma Mimamsa. Though much may be said in this way——note *e. g.* "by suggestion *(lakshana)* corresponding to *linga* in *Jaimini*" (K. M. 99), and "like *antarvedi* in the Mimamsa (III, 7, 13–14) which means not merely at the centre of the altar, but anywhere in it"; (K. M. 103).——I do not wish to do so lest the paper should be too long. I cannot, however, but touch upon one point before I stop, which is in connection with a certain *Mīmāmsā nyāya* applied by lawyers to a *smriti* text which prohibits the adoption of only son.

It is to the introduction to the *Bhattadipika* of Nirnayasagara by Brahma Sri Anantakrishna Sastri of the Calcutta University, that I owe my first knowledge of the matter. But there the Sastri tells us that it is *Hetuvannigadadhikarana* (1, 2, 3) also called *Surpadhikarana*, which is applied to the *smriti* text referred to; while Keith says that *Vidhivannigadadhikarana* (1, 2, 2), also called *audumbaradhikarana* it is that is resorted to there. Unlike them both Mayne writes (Hindu Law and Usage 34) Mr. Mandlik says, " It is a rule of the Purva Mimamsa that all texts supported by the assigning of a reason are to be deemed not as vidhi (an injunction), but simply as arthavada (recommendatory). When a text is treated as an arthavada it follows that it has no obligatory force whatever. "

As regards *Hetuvannigadadhikarana* I refer the reader to an article of mine added to the *anubandha-parisishta,* where it is clearly shown that the application of this *nyaya* to the *smriti* is not only unfavourable to the Judgment passed but quite favourable to the contrary. It is a great pity that even Br. Anantakrishna Sastri, who, as a pure *Mimamsa* Pandit, is expected to have an intimate acquaintance wiih *Mimamsa nyayas,* has treated of the subject very superficially

It is difficult to know how it was that Keith made this rule belong to *Vidhivannigadadhikarana*, the substance of which is this:— that a sentence read along with an injunction, but void of any peculiarity of an injunction, is not to be deemed as *vidhi* but as *arthavada*.

As to Mr. Mandlik's rule of the Purva Mimamsa, it may be safely asserted that there is not such a sweeping general rule laid down anywhere in the whole *Sastra* or rather in the whole literature of *Mimamsa*. According to the *Mimamsakas* a whole passage cannot be an *arthavada*. A *vidhi* may be without an *arthavada*. But an *arthavada* cannot be without a *Vidhi*. A close study of the *Sabarabhashya* of *arthavadadhikarana* would make it clear that where there is an *arthavada* without a *vidhi*, a *vidhi* should be inferred there. So to treat a whole passage as an *arthavada* is quite against the *Mimamsa* principles. There is, however, a *Sutra* in the *smritipada* of Jaimini (1, 3, 4) which in Keith's words "goes no further than to hold that, if for a rule which has no known Vedic sanction a selfish motive can be seen, it is impossible to postulate for it, the authority of a Vedic text." This is the interpretation given to it by Sabara, which Kumarila rejects. Even though Sabara's interpretation is accepted this *sutra* cannot apply to the *smriti* in question, for the

reason assigned there has not any selfish motive under it but is one inculcated in express *srutis* such as

**ब्राह्मणो ह वै जायमानस्त्रिभिरृणवा जायते ।**
**आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ।**

A *Mimamsaka* may perhaps think that though there is no *sutra bhashya* or *vartika*, yet *Khandadeva* may be brought in support of whar Mr. Mandlik has said; for does *Khandadeva* not say in *Kalpasutradhikarana* (*Mimamsa Kaustubha smritipada p. 93.*)

**यत्रापि च न्यायोपन्यासपूर्वकं किञ्चिदुच्यते तत्रापि तन्मूलभूतश्रुतिसत्वे न्यायोपन्यासवैयर्थ्यापत्तेर्न्याय एव तन्मूलं न श्रुतिः;**

and that though this rule cannot apply to a *sruti* text and to that extent Mr. Mandlik may be wrong, one fails to see why it cannot be applied to *smriti* texts such as the one in question.

But he should take into consideration what in the next lines *Khandadeva* says there:

**इत्यवधारणात् न्यायस्य च मीमांस्यमानस्याभासत्वावधारणे तस्याप्यननुष्ठानलक्षणमप्रामाण्यं यावच्छ्रुतिदर्शनमभ्युपगन्तव्यम ।**

Fortunately, Mr. Mandlik's view has not found wide acceptation as Mayne informs us.

When one bears in mind these awful misunderstandings of texts and *nyāyas*, he will clearly see the truth of old *Vaidic* teachings such as

आचार्यवान् पुरुषो वेद ।
आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् ।

Now I close the topic with a pleasent and respectful reference to Prof. S. Kuppuswami Sastri., M. A., my second *Mimamsa guru* and Mr. S. Vedanta Aiyangar M. A. L. T., my teacher and benevolant principal, the result of whose good wishes and encouragement is my activity in literary career; and with a quotation from my *Siddhāntamuktā-sara* yet to be published.

सिद्धान्तैर्बाह्यसिद्धैरपि भुवि विदुषां विभ्रमाधानदक्षै-
रव्यामुग्धो मनागप्युपनिषदुदितं देवमम्भोरुहाक्षम् ।
ध्यायन्नाह्लादमानो यदहमिह भवाम्यत्र नूनं निदानं
मीमांसास्वादभङ्गीपरिचयफलकोऽपाङ्गपातो गुरूणाम् ॥

Tantrōdyānam.
April 1925.
**D. T. Tatacharya Siromani.**

---

Printed at the Sarada Vilasa Press, Kumbakonam.

# प्रस्तावना ।



महतां सन्निधाविदमावेदयतो मम सन्तुष्यतितमां चेतः यद्या-दृशं फलं लक्ष्यीकृत्य कैश्चित्संस्कृताभिमानिभिर्महामतिभिः मद्रराज-धानीविश्वविद्यालये (Madras University) संस्कृताभिवृद्ध्यनुगुणं परीक्षाबिरुदप्रदानादिकं प्रवर्तितं तदिदानीं, तद्व्यवस्थानुरोधेन प-रिष्कृत्य तञ्जापुरजिल्लासमाजेन (District Board) परिपाल्य-मानायां श्रीमत्पञ्चनदसंस्कृतमहाकलाशालायां पञ्च वर्षाणि शिरो-मणिकक्ष्यायां स्थित्वाऽधीत्य विश्वविद्यालयपरीक्षां तस्याः कला-शालायास्सकाशात्प्रथमं प्रविश्योत्तीर्णेष्वन्यतमो भवन् सद्यस्तस्या-मेव कलाशालायां वितीर्णविमर्शकपदोऽहं वर्षमेकं तत्पदमास्थाय कृतेनानेन मीमांसोपन्यासेन यथाशक्ति सम्पादयितुमयतिषि । सं-स्कृतलेखनभाषणयोश्चिरप्रलीनयोः तत्र संस्कृताभिज्ञानामादरेऽप्य-त्यन्तमभूते, तत्कृते मम यदृच्छासुकृतेन तथा महानभिलाषः तथा महानभिनिवेश आसीत् यथा बाल्य एव समुचितशिक्षणविरहेऽपि स्खलित्वा स्खलित्वा लिखितुं संस्कृते भाषितुमपि अस्मि प्रवृत्तः । सोऽयं मम स्वाभाविक उद्यमस्तदनुगुणस्थानलाभेन बहुगुणितो ऽभवत् ।

विषयं प्रति प्रथमं मम विमर्शोऽजायत; कं विषयमुपादाय लिखेयमिति । न शास्त्रीयं कमपि ग्रन्थं विलिख्य स्थानोचितं कृतं भवेत् । नापि संस्कृतगोचराद्बहिर्भूतं विलिख्य । तत्र पाश्चात्यानां

संस्कृतविमर्शकानां पद्धतिरनुसर्तव्येत्यभात् । तेष्वपि केचित् भाषामात्रं, अन्ये वेदान्, इतरे उपनिषदः केवलं, परे षड्दर्शनीं, अपरे संस्कृतग्रन्थान् सर्वानधिकृत्य लिखन्ति । अस्ति मे वस्तुतः कामः सर्वमिदमधिकृत्य परैरभिधीयमानं यच्च यावच्च तत्सर्वमधिगत्य परिचिन्त्य यथोचितं श्लाघनं गर्हणं वा विदध्यामिति । आसीदस्ति च मेऽभिसन्धिः भाषान्तराभिज्ञा विमर्शकहेतोःकथंचित् प्रौढे वयसि संस्कृतं परिचित्य स्वोत्प्रेक्षया निम्नोन्नतवैषम्यमपोह्य यदभिदधति ततोऽभ्यर्हिततरो नितरां विश्वासार्हश्च तेषामाशयो ये शास्त्रेषु चिरं परिश्रम्य पङ्क्तिशोधनपाण्डित्यमपि लब्धवन्तः । यथा यथा कश्चित्प्रौढान् प्राचीनग्रन्थान् परिचिनुयात् तथा तथा स मन्वीत न भाषान्तरवेदिविमर्शकपरिहासप्रथमभाजनभूतानां केषाञ्चिदद्यतनसंस्कृतपण्डितानामिवशुष्कपरकीयशब्दजालानुवचनमात्रस्वरूपं प्राचां शास्त्रेषु पाण्डित्यम्, किन्तूदाह्रियमाणतत्तत्प्रमाणमूलतत्प्रामाण्यविमर्शविशेषितं आवापोद्वापपटिमपरिभासुरं प्रमाणाविरोधिस्वातन्त्र्यावलम्बनप्रकाशितबुद्धिविशदिमभरश्चेति । व्याकरणस्य मुख्यप्रयोजनं 'रक्षोहागमलघ्वसन्देहाः' इति पञ्चधाऽभिधाय क्रमेण तद्विवृण्वन् महाभाष्यकारः

निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च

इत्यागमानुरोधेन व्याकरणमध्येयमित्याह । तत्रास्यागमस्य व्याकरणाध्ययनानुष्ठापकत्वं काममस्तु, एतत्प्रयोजनत्वन्तु कथङ्कारं तस्य? लिप्सया यदुद्दिश्य पुरुषः प्रवर्तते तत्प्रयोजनमाचक्षते । न खलु व्याकरणाध्ययनस्य उदाहृतागमाधिगमाय प्रवृत्तिरिति मीमांसायां

प्रथमाध्यायतृतीयपादे व्याकरणाधिकरणपूर्वपक्षे भट्टकुमारिल आचिक्षेप। वैयाकरणाः केचिदागमविषये प्रयोजनशब्दस्यान्यादृशार्थकत्वं वर्णनीयम्—प्रयुज्यते अनुष्ठाप्यते व्याकरणाध्यनं येनेति, इति यत्समादधिरे तदपि सकृत् श्रुतस्य शब्दस्य विजातीयानेकार्थबोधकत्वे वैरूप्यापत्तिरिति न्यायसुधायां भट्टसोमेश्वरः परिजहार।

एवं स्थिते पुनः कुमारिल आह—कथमयमागमः। आगमस्य हि सतः कस्याञ्चिच्छाखायां श्रवणं भवेत्। नास्य 'निष्कारण' इति वाक्यस्य यत्र क्वापि श्रवणम्। स्वाध्यायोऽध्येतव्य इति परं शतपथादिषु पठ्यमानं वेदाध्ययनं विदधाति। न पुनरङ्गाध्ययने कश्चिदागमः—इति। अत्र हि स्पष्टं पश्यामः न महाभाष्यकार इत्येव तदुक्तं तथैवाभ्युपगन्तुं कुमारिल इच्छति। महाभाष्यकारो वा तस्यापि वा पितामहः प्रमाणस्य पुरस्तादितरैस्तुल्यवृत्तिः। तेन कुत्र कोणे किमस्तीति सर्वा एव शाखाः सुसूक्ष्मं विचिन्वन् मीमांसकमूर्धन्यः कुमारिलः, यस्यां कस्याञ्चिदपि शाखायामनुपलम्भात् साक्षात्पतञ्जलिनाऽऽगमत्वेनोदाहृतमपीदं वाक्यं निर्विशङ्कमनागममाह। तथाऽऽनुषङ्गिकाणि व्याकरणप्रयोजनानि प्रतिपादयन् महाभाष्यकारः

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह

इति ऋचमुदाहरति। तदधिकृत्य कुमारिलो विलिखति

दुष्टश्शब्द इत्यत्रापि बहुजनप्रसिद्धशिक्षाकारपठितमन्त्रपदोद्धारेण शब्दपदं प्रक्षिपता स्वपक्षानुरागो दर्शितः

इति। एवमेव सर्वेषामपि प्राचां व्याख्यातॄणां विमर्शाविनाभावी

लेखनसम्प्रदाय आसीत् । अर्वाचीनः शब्देन्दुशेखरकारो नागेश-भट्टोऽपि, व्याकरणस्यानुषङ्गिकप्रयोजनकथनावसरे पतञ्जलिनोदाहृतायाः

यदधीतमविज्ञातं निगदेनैव शब्द्यते

इत्यस्या ऋचः प्रतीकमादाय स्वीये उद्योतग्रन्थे

निरुक्ते तु 'यद्गृहीतमविज्ञात' मिति पठ्यते

इति स्वस्य सर्वग्रन्थपर्यालोचनशीलतामाविष्करोति । तत्रभवतः सायणमाधवस्य कवितार्किककेसरिणः अप्पय्यदीक्षितस्य वा, तत्तद्ग्रन्थानिषेवणे सुस्पष्टं प्रतीयमानमसर्वज्ञदुर्लभं विवेचनपाटवमनुध्यायतां अस्माकं शरीरं पदे पदे रोमाञ्चकञ्चुकितं भवति । स एष क्रमः, न जाने, कथङ्कारं पश्चाल्लुप्तः । तत्र क्वचित् कदाचित्प्रवर्त्यमानासु राजसभासु केवलं धनायया जल्पकथैकहेतोः शास्त्रीयवादग्रन्थेषु परिश्रममत्यन्तमूढवतां विदुषां, शास्त्रान्तरग्रन्थविषये तत्तच्छास्त्रीयप्राचीनग्रन्थविषये वा विमर्शे दविष्ठे सञ्जाते—तथा दविष्ठः सञ्जातः यथा पठ्यमानग्रन्थकर्तृनामापि न विज्ञायते—संस्कृतस्येत्थम्भवितव्यतया पाश्चात्यदृष्टिगोचरं दैवादासादितं ऋग्वेदप्रभृतिकं संस्कृतग्रन्थजातं प्रति देशान्तरेषु विपुलो विमर्शो जजृम्भे । जगति सम्प्रति विमर्शसम्प्रदाये परदेशविमर्शकाः प्रगल्भन्तेतमामिति न कश्चित्सन्दिहीत । अथापि तु विमर्शनसरणौ जात्यन्धानां शुष्कशास्त्रिणां शास्त्रपाण्डित्यं यावद्गौरवमर्हति तावदेवाशास्त्रपठितिनां शुष्कविमर्शकानां विमर्शनपाण्डित्यम् । एवमिवाभिसन्दधानाः प्रथमे विद्वच्छिरोमणिपरीक्षाप्रवर्तकाः, मन्ये, उभयोः शा-

स्त्रपाण्डित्यविमर्शनशक्त्योः पारस्परिकसमागमसञ्जातं रामणीयकमनुबुभूषवः, भाषान्तरमात्रस्थितविमर्शनधोरणीपरिचयोपयुक्ताया आङ्गलभाषाया अपि परिज्ञानं शिरोमणिबिरुदार्हन्तीं कामयमानैः सम्पादयितव्यमिति नियममारचयांबभूवुः ॥

यद्यपि सोऽयं नियम इदानीं संस्कृतविद्यार्थिनां हितमहितं वा ध्यायद्भिरन्यथाकृतः, तथाऽपि पूर्वमेव परीक्षां प्रविष्टेन मया सादरकृतेन आङ्गलाध्यापकपरमानुग्रहेण अनतिदीर्घेणैव कालेन भाषान्तरपरीक्षायामपि विजयः प्राप्तः । सोऽहं विमर्शपथे पाश्चात्यपद्धतिमनुसर्तुकामो भवन् शास्त्रसम्बन्धिनं विषयं विहाय यद्यन्यमुपाददीय तर्हि कालेन कृतश्शास्त्रपरिचयो मालिन्यं भजेत। तथाच सति नाहमाङ्गलविदां गोष्ठीषु गणयितुमर्हः स्याम् , तस्यां भाषायामनतिप्रावीण्यात् । न वा संस्कृतविदाम्; शास्त्रपरिज्ञानस्य मालिन्यात्।

अनया भिया शास्त्रीयादन्यत्र विषये विमर्शाय न गन्तव्यमिति मे मतिरासीत् । तत्र 'न्यायमीमांसाशिरोमणि'ना मया परिचितयोर्न्यायमीमांसयोः मीमांसाशास्त्रस्य प्रचारवैरल्येन, तत्प्रकाशनकृते अत्यन्तमल्पाऽपि मामिका शक्तिरुपयोक्तव्येति ततोमुखं ममाधिकतरः पक्षपातः समजनि । तस्मान्मीमांसामेव विषयीकृत्य किञ्चिल्लिखानीति निरचिनवम् । तत्र लेखने कथन्तां प्रति पृष्टाः मीमांसागुरवो मे श्रीमन्तः शास्त्रिपादाः, एकैकस्मिन्नधिकरणे श्रुत्यर्थाभ्यां निरूपितानां न्यायानां स्मार्तान्युदाहरणानि प्रदाय तत्र चेत् न्यायप्रचारविशदिमा सम्पाद्येत तर्हि तत् सद्यो लौकिकोपयोगाय कल्पेतेति प्राब्रुवन् । सम्यगिदं मह्यमरोचत । किन्तु तत्र प्रवृत्तिः

बहूनि वर्षाणि व्याप्रुयात् । अपिच मीमांसायाः सामान्यतोऽपि ग्रन्थस्वरूपविषयादिकं प्रति कियता विस्तरेण प्रवृत्तो न कोऽपि विमर्श इति तत्रैव मे प्रथमतः प्रवृत्तिरुचितेत्यभात् । एवं विज्ञापितास्ते श्रीमन्तः शास्त्रिपादाः इदङ्कलाशालाऽध्यक्षपादाश्च तथेत्यन्वमन्यन्त ।

एवं विषये निश्चिते तदुचितं पुस्तकानि पर्यालोचयितुमुपक्रममाणोऽहं विना साक्षान्मीमांसाशास्त्रपुस्तकानि मीमांसासम्बन्धिनि विमर्शेऽपि कियद्दूरं व्याप्रियमाणानि भाषान्तरनिबद्धानीमानि पुस्तकान्यविन्दम् ।

1. कोल्ब्रूक्—Miscellaneous Essays.
2. माक्स्मुल्लर्—Six Systems of Indian Philosophy.
3. एल्. के. सर्कार्—Mimamsa rules of Interpretation

वीबर् अत्र विषये किञ्चिदेवाह । तथा मेक्डानल् अपि । एतत्सर्वं पर्यालोचितवतो मे इदमावश्यकं प्रत्यभात् यद्विशिष्योपन्यासान्तरं किञ्चिल्लेखनीयं यत्र उदहृताङ्गललेखनेषु विद्यमानानामन्यथाभावानां परिशोधनमेव मुख्यं लक्ष्यं स्यात् इति । अथापि प्रकृतमामकीनोपन्यासाय परं यद्वक्तव्यं तत् तत्रतत्रोक्तवानस्मि ।

तत्र इमे लेखकाः, न विषयं न ग्रन्थकारान् नान्यत् किञ्चित् विस्तरेण प्रतिपादयन्ति । कोल्ब्रूक् परं कानिचिदधिकरणान्यनुवदति । तस्मादेतेभ्यो मे परिमितं साहाय्यम् । एवं वदन्नपि नाहं विस्मरामि तेभ्यो विमर्शकेभ्यः अस्मदीयमावश्यकं कृतज्ञभावं प्रकटयितुम् । यदि हि ते पन्थानं न दर्शयेयुः, क इदानीं भारत-

वर्षे संस्कृतग्रन्थपरिशीलनकथामपि विदधीत ? नाप्यहं तथा व्यामूढः यथा भाषान्तरविमर्शकानां संस्कृतविषये यावान् परिश्रमः तावन्तं यथावदवगन्तुं न प्रभवेयम्। परन्तु तादृशं पन्थानमधिष्ठाय तावन्तं श्रमं ऊढ्वा यदि संस्कृतपण्डिताः प्रोत्साहवन्तो व्याप्रियेरन् तदा ततोऽधिकतरं फलमिमे प्रदर्शयेयुः। तदभावेनाशास्त्रवेदिनो विमर्शका महता परिश्रमेणान्ते, शास्त्रारम्भे प्रथमपठनीयेन ग्रन्थेनावगन्तव्यमर्थं नान्तरीयकाशुद्धिसंमिश्रमुपन्यस्यन्तीति, किं कुर्यां, मद्बुद्धौ यज्ज्ञातं तदस्मि वदितुं निर्बद्धः।

माक्स्मुल्लर् स्वकीये 'सिक्स् सिस्टेमूस् आफ् इन्डियन् पिलासपि' ग्रन्थे सुबहुश्लाघमानः मधुसूदनसरस्वतीकृतं प्रस्थानभेदं भाषान्तरेणानुवदति। इदानीन्तनपुस्तकपरिगणनसम्प्रदायोऽपि प्राचीनस्य कस्यचित् भारतीयस्य बुद्धिमागतपूर्व इति स चित्रीयते। स चित्रीयेततरां यदीदानीं स्थित्वा श्रीमत्यनन्तपुरे (Trivandrum) राजकीयैः प्रकटितं प्रपञ्चहृदयन्नाम ग्रन्थमवलोकयेत्। अनेन ग्रन्थेन विषयविशेषे मम सम्यगुपकृतम्। साकमेतैः, अस्मत्पाठशालापुस्तकालये विद्यमानानि न्यायवेदान्तादिसंबन्धीनि विविधानि पुस्तकानि यथाशक्ति यथावकाशं मया पर्यालोचितानि। परीक्षायामुत्तीर्णस्य मम साम्प्रतं वर्षद्वयमतीतम्। तत्राद्यं कृत्स्नं मया विमर्शकपदमास्थितम्। तदानीं कलाशालासम्बन्धि कार्यान्तरमपि मम किंचिदवश्यकर्तव्यमासीत्। एवं सति लब्धेऽवकाशे लेखनोपयोगीनि पुस्तकानि निरीक्षमाणः उपन्याससामग्रीं सम्पादयन्नवर्तिषि। एवमेकस्मिन् वर्षेऽतीते द्वितीयारम्भे साक्षान्मीमांसा-

ध्यापकीकृतः, विमर्शकपदहानप्रसक्तया विमनायमान एव पाठन-तदुपयुक्तविषयपरिचिन्तनावशिष्टे काले उपन्यासमेतं विलिख्य परिसमापयम् । न चेदीदृशः समाचारः, प्रथमस्यैव वर्षस्यान्ते उपन्यासोऽयं सज्जीकृतो भवेत् । इतोऽपि च सूक्ष्मतरं कृतविवेचनः स्यात् । इदानीं जगति प्रवर्तमानस्य विमर्शस्य न क्वचिन्निष्ठा दृश्यते । यदद्य केनचित् किञ्चिदभिवीक्ष्य इदमित्थमिति विलिख्यते तदेव श्वोभूतेऽन्यपर्यालोचनेनान्यथयितव्यं भवति । तदिदं जानन्नहं यावच्छक्यं तावदवधानमाधाय, तत्रतत्रोपलब्धं प्रमाणमनुरुध्य यद्वक्तव्यमित्यभात् तदभिदधान उपन्यासमिममलिखम्॥

प्रथमद्वितीयान्त्ये मन्त्राधिकरणे पूर्वपक्षसूत्रेष्वन्यतमं सूत्रखण्डो वा 'बुद्धशास्त्रा' दिति ।

अस्यार्थः—बुद्धस्यावगतस्यार्थस्य बोधकं शास्त्रं मन्त्रात्मकं वेदवाक्यं यतोऽस्ति तस्मात् मन्त्रोऽविवक्षितार्थ इति । यथा 'अग्नीदग्नीन् विहर' इति अग्नीन्नामकं ऋत्विग्विशेषं प्रति अध्वर्युणा पठ्यमानः सम्प्रैषमन्त्रः व्यर्थः स्यात् यद्यर्थविवक्षा भवेत् । ऋत्विग्बुभूषुणा हि मयाऽस्मिन् कर्मणि एतदेतत् कर्तव्यमिति सम्यक् ज्ञातव्यम् । तथा ज्ञाते सति पुनः किमनेन संप्रैषेण । अतोऽदृष्टार्थोऽयं मन्त्रपाठ इति । एवमेवास्य सूत्रस्यार्थ इति

"सम्प्रैषे कर्मगर्हाऽनुपालम्भः संस्कारत्वात्"

इति सिद्धान्तसूत्रं दृढीकरोति ।

तदिदमुपलभमानो वीबर्, गौतमबुद्धं स्मरन्, बुद्धशब्दं सकृदाह

जैमिनिः । परन्तु अत्रान्योऽर्थोऽभिसंहितः स्यादिति लिखति । एवं लिखतोऽस्य किमभिसंहितं भवेत्? । बुद्धगौतमात् सर्वथा प्राचीनो जैमिनिरिति नास्ति मे संशयः । मन्ये प्रायेण परेऽपि न संशयीरन् । एवं सत्यपि स्वदृष्टिगोचरमासादितं कञ्चिदर्थं किमित्यविलिख्य तूष्णीं त्यजेयमिति तत्तद्विषयान्वेषणावधानचातुरीप्रकाशनेच्छया एवं कृतं स्यादिति मामकीनोत्प्रेक्षा । वस्तुतस्तु शास्त्रान्तरसंवादरूपमन्यदस्ति सुबहु जैमिनिसूत्रेषु विमर्शनीयम् । यथा—द्वादशाध्यायस्य चरमेऽधिकरणे विप्रतिषेधे परमित्येकं जैमिनिसूत्रम् । पाणिनेरष्टाध्याय्यामपि विप्रतिषेधे परं कार्यमिति दृश्यते । तथा षष्ठाष्टमपञ्चमाधिकरणे 'उदगयनपूर्वपक्षाहःपुण्याहेषु' इति जैमिनिः सूत्रयति । एवमेव गृह्ये आपस्तम्बः । एतदादिविमर्शकानामवश्यकर्तव्यं संविदानोऽपि पुनरवसरान्तरे यथोपलम्भं विषयान्तराणि संयोजयितुं प्रसक्तिमाशंसमानोऽहं न दूरमगच्छम् ।

एवं शाबरभाष्ये सन्ति भाष्यान्तरसंवादीनि अलथाभूतानि च लौकिकन्यायात्मकानि बहूनि वचनानि यानि प्रकृते उपन्यासे संकलयितुमपारयतो मम महती अतृप्तिः । तथा प्राचीनग्रन्थपरिशोधने बहूनामिदानीमवर्तमानानामश्रुतपूर्वाणाञ्च मीमांसाग्रन्थानां नामान्युपलभ्यन्ते । शब्दशक्तिप्रकाशिकायां जगदीशोऽपि क्वचित्

मीमांसामहार्णवे तु वत्सेश्वरः

इत्याह । एतत्कृते प्रयस्य तत्तद्ग्रन्थनामानि प्रकटय्य किमिदानीं ते ग्रन्थास्सन्तीति कोणे कोणेऽन्वेष्टुं युक्तम् । सर्वमिदं विहाय

मीमांसायामधिकरणेषूदाह्रियमाणानि वाक्यानि कुत्रत्यानीति तदु
पलम्भोऽत्यन्तं सौकर्याय कल्पेत । एतादृशेषु सत्सु बहुषु चि
प्रयासापेक्षिषु अवान्तरविषयेषु प्रकृते तत्र सर्वत्र पदं निधा
मौचितीमनवेक्षमाणः

१. मीमांसाया आविर्भावः
२. विद्यास्थानेषु तत्स्थानम्
३. तत्प्रबन्धप्रबन्धारः
४. तत्प्रतिपाद्या विषयाः
५. तत्रत्यप्रमाणप्रमेयतत्त्वम्
६. प्राभाकरमतभेदः
७. सैश्वरमीमांसकमतम्
८. सङ्कर्षकाण्डः
९. मीमांसायाः प्रयोजनम्

इति वक्तव्यं नवधा विभज्य एकैकस्यैकैकमधिकारमकल्पय

षष्टिपादघटिताया मीमांसयाः सूत्राणि २७४५, अधिकरण
नि ९०६ इति जैमिनीयन्यायमालामुद्रापका लिखन्ति । अ
कोल्ब्रूक्, सूत्राणि २६५२; अधिकरणानि ८१५ इत्याह । इदम
न सुखं निर्धारयितुं शक्यते यतः समीचीनः सूत्रपाठो न कश्चिदु
लभ्यते। भाष्यपङ्क्तीस्सूत्राणिति, सूत्राणि भाष्यपङ्क्तय इति मन
मानाः बहवो बहुधा लिखन्ति मुद्रापयन्ति च । तथा ग्रन्थक
अपि क्वचिदधिकरणं भिन्दन्ति क्वचिदेकीकुर्वन्ति । तस्मादेतद
सर्वं संशोध्य पृथक् मीमांसासूत्रपाठः प्रकटनीय इति मनोरथमारु

मुरारेस्तृतीयः पन्था इतीदं असकृत् संस्कृतज्ञानां श्रवणपथमागतं भवेत् । काव्यमात्रविदः तदिदं अनर्घराघवनाटककर्तुर्मुरारेर्विषये प्रवृत्तं मन्यमानाः किमपेक्षया तृतीयस्तस्य पन्था इति तदुपलम्भाय सुबहु क्लिश्यन्ति । केचित्पुनरुत्प्रेक्षन्ते— मीमांसायां गुरुकुमारिलयोः द्वौ पन्थानौ । ताभ्यामतिरिक्तमन्यादृशं पन्थानं प्रवर्तयन् मुरारिमिश्रो नाम कश्चिन्मीमांसक आसीत् । तद्विषये प्रवृत्तमिदं मुरारेस्तृतीयः पन्था इतीति । मीमांसकसम्मतस्वतःप्रामाण्यविषये गुरुकुमारिलाभ्यामन्यादृशं प्रकारमाह मुरारिमिश्र इति उदयनकृतन्यायकुसुमाञ्जलिव्याख्याने प्रकाशे गङ्गेशोपाध्याय पुत्रो वर्धमान आह । तमेकं विषयं विहाय नान्यत् किञ्चित् मुरारि मिश्रमतं तद्ग्रन्थं वा प्रति विज्ञायते । तेन नाहमेतं प्रकृतोपन्यासे क्वचिदकीर्तयम् ।

इयत्या सामग्र्या अनेन प्रकारेण एतत्कलाशालाविमर्शकेषु प्राथमिकेन मया इदंप्रथमं कृतस्यास्योपन्यासस्य विमर्शकमहाशयानां पुरस्तात् का स्थितिर्भविष्यतीति निर्धारयितुमप्रभवन्नपि, प्राचीनग्रन्थपरिचयेन सावधानं सम्पादितः संस्कृतपङ्क्तिलेखनप्रकारविशेष इह उपयुज्यमानः संस्कृतलेखकगोष्ठ्याः प्रमोदाय कल्पेतेति दृढं विश्वसिमि । एष इदानीं स्थास्यन्निदमन्ते विज्ञापयामि । सर्वविदितमिदं यन्मीमांसका वेदो नित्य इति स्थापयन्ति । अतार्किकाणां दार्शनिकानां सर्वेषामिदमेवं सम्मतम् । इदानीं विमर्शे प्रवर्तमान एकैकोऽपि तस्य कालं कञ्चिदर्वाचीनं कल्पयित्वैव तदुपरि

[illegible]

जः यथा पक्षान्तरेण सह तुल्यकोटित्वमपि नार्हं वक्तुमिति मम द्रढिष्ठोऽभिसन्धिः । तेन यद्यपि देशान्तरविमर्शका नैतत्सम्मंस्यन्ते तथाऽपि भारतीयानां पुनरपीदं पर्यालोचनकोटौ निविशतामिति मन्यमानोऽहं प्रकृतोपन्यासे तमेव पक्षमुच्चैः प्रास्ताविषम्। मीमांसकेषु हि यस्य कस्यापि अहृदयं वेदनित्यत्वांगीकरणं न वक्तुं शक्यते।

दैनन्दिनिकोपयोगादत्यन्तबहिर्भूतं वस्तु स्वबुद्धिमात्रगोचरं चिन्तयन्त इमे लोकयात्राया अनुपयुक्ता इति क्रोडपत्रपण्डितानामपप्रथा आसीत् । सम्प्रति तु प्राचीनग्रन्थादिचरितं विमृशतामस्माकमेव तामपप्रथां कल्पयितुमुद्युञ्जते । वस्तुतः प्राक्तनचरितपरिज्ञानेन प्रोत्साहिता भवेयुरिदानीन्तना इति फलमिदमस्त्येव । तथाऽपि वेदस्य नित्यत्वेऽङ्गीक्रियमाणे न किञ्चिदिदानीं लोके हीयेत। अनित्यत्वे तु निश्चिते धर्मास्तित्वं शिथिलितमेव जायेत । तेन वस्तुतत्वे विभ्रष्टव्ये मीमांसकैः अथवा सर्वैरपि वैदिकैः सहृदयमाद्रियमाणोऽयमागमनित्यत्वपक्षो यथा नात्यन्तं विलीयेत तथा कर्तव्यमिति मन्वानः पुनः पुनरपि परिचिन्त्य तत्रानुपपत्तिलेशमपश्यन् नाहमन्यथा वदितुं वा स्वाशयं निगूहितुं वाऽपारयं न वा यत्नमकार्षम् । तेनात्रोपन्यासे वेदनित्यत्वप्रतिपादनावसरे कृतं विवेचनं पक्षपातेनेति वा दृढपूर्वश्रुतो मूर्ख इति मौर्ख्येणेति वा यदि केचिद्वदेयुः तदिदं मामकीनस्य आशयस्य सम्यगग्रहणादित्येवमगत्या वक्तव्यं भवेदिति।

---

॥ श्रियै नमः ॥

# ॥ मीमांसाऽभ्युदयः ॥

## अवतरणाधिकारः ।

सा परा देवता सा श्रुतिर्विश्रुता
स स्वयं तन्त्रकारो मुनिर्जैमिनिः ।
अप्रमां मेऽखिलां विप्रयोज्य क्रियात्
क्षिप्रमेवाद्य मामप्रमादोज्ज्वलम् ॥

यथा सर्वेषां प्रकाशानां सूर्यः, यथा सर्वासामपां समुद्रः, यथा सर्वेषां जगतां परं ब्रह्म, तथा सर्वेषां विद्यास्थानानां वेदाभिधानः शब्दराशिरेकः प्रभवश्च गतिश्च बभूव । प्राचीनचरितं परामृशन्, भाति मे, न कश्चिदत्र विषये विप्रतिपद्येत यत् कालस्स कश्चिदासीद्भारतवर्षस्य यत्र सोऽयमत्रभवान् वेदः अनितरसाधारणं सार्वभौमं प्रामाण्यमाबिभ्राणो निजाज्ञावशंवदा अशेषाः प्रजाः यथामर्यादं प्रशासदत्यन्तं चकाशे । अवैदिकमतप्रवृत्तिं परिशीलयन्तः ततः प्राक्काले कीदृशस्समाचारो वेदस्य तदनुसारिणां वेति निश्चेतुं शक्नुमः । केचिद्वेदस्यानित्यत्वं साधयन्ति । केचित् यजनं निषेधन्ति। विस्पष्टं खल्वितो विज्ञायते ततः पूर्वं वेदस्य नित्यत्वमभ्युपगतमासीत् तद्विहितं यद्वातद्वा सर्वमनुष्ठितमासीदिति ।

किं कारणं एतावन्तं विश्वासमाबबन्धुर्वेदप्रामाण्ये तदानीन्तनाः पुरुषाः ? ये वदन्ति मनुष्यशक्तिमतिक्रम्य वर्तमानं वर्षविद्युदादिकं

वीक्ष्य वीक्ष्य विवृद्धविस्मयानां प्राचामार्यपुरुषाणां विविधचित्तवृत्ति-परीवाहोद्गारोऽयमेतावान् शब्दराशिरिति तेषामेष दुस्समाधानः प्रश्नः । कालयापनाय विनोदकारणाय वा यथातथा विरचितं किमपि कथमिव महता क्लेशेन साध्ये यजनयाजनादौ सर्वे परमप्रमाणीकुर्युः? कथङ्कारं वा सुबहु परिश्रम्याधीतवन्तः स्युः ? न नाम वाचि श्रमः, तेन यद्यत् हृदयमागतं तत्तद्वदन्तु वेदप्रबन्धारः । (1) कथन्तु समस्तं द्वन्द्दुःखमीषदप्यगणयन्तः स्वोत्प्रेक्षामात्रासिद्धं वस्तुजातमुद्दिश्य उपवासप्रायकष्टैकमये कर्मणि आत्मानं ते पातितवन्तः स्युः ? तावतः क्लेशस्यात्मानमपि पात्रीकृत्य परान् वञ्चयितुं प्रवृत्तानां किन्नाम तेषां प्रयोजनमभिलषितं भवेत् । अथ यदि स्वयं ते नानुष्ठितवन्तः कथं ते जनानां प्रत्यायिता अभविष्यन् ? स्वोत्प्रेक्षितेप्यर्थे पश्चात्स्वोत्प्रेक्षि-तत्वं विस्मृत्य स्वयमपि तत्र ते प्रत्ययमकार्षुरिति पुनर्वदितुमितोऽप्यधिकतरं साहसमपेक्षितम् ॥

एवं पुनरत्र वक्तुं शक्यम् । यथेदानीं वयन्तथैव प्रागपि सर्वे न जानन्तिस्म कदा कुत्र को वेदभाग आत्मानमाविश्चकारेति । अद्यत्वे पश्यामः आचार्यमुखादधीत्य वेदमधिगच्छन्तीति । तथैव सर्वदाऽयं क्रमो बभूव। वेदमनुसृत्य प्रवृत्ते पुराणप्रभृतिकेऽनल्पे प्रबन्धजाते न क्वचित्पश्यामः अयं पुरुष इदानीममुं वेदभागं चकारेति वचनम् । अनित्यत्वं तस्य साधयितुमैदम्पर्यं वहन्तोऽपि अन्ततो गत्वा ईश्वरकर्तृकत्वमेव प्रतिपद्यन्ते । अयमेव ह्यंशः प्रमाणीभवति सुबहोः कालात्पूर्वमपि वेदस्य न कश्चित्कर्तृत्वेन मनसाऽपि ध्यात इत्यस्मिन् विषये । कथन्नाम शब्दसंदर्भेण सता केनचिदकर्तृकेण भवितं

शक्यमिति वैदिकसंप्रदायबाह्यानामाक्षेपः । शब्दश्च नित्यश्चेति विषयोऽयं न तेषां बुद्धिमारोहति । तत्रालोच्यमाने कारणमेतत्स्यादिति मन्तुमस्त्यवसरः । इह लोके परं यदावश्यकं मनुष्योचितं साधारणधर्मजातं तत्रैव चिराद्विरचितश्रमाणां तेषां मनुष्यजन्मनः पूर्वम्भूतं पश्चाद्वा भाविनं विषयम्प्रति मनो व्यापारयितुं नासीत्कश्चिद्वसरः नासीत् कोपि निर्बन्धः न वाऽऽसीत् कोपि प्रामाणिकसम्प्रदायः। मतविशेषमवलम्ब्यापि तत्प्रबन्धप्रतिपाद्येषु न तावन्तं विस्रंभं गौरवविशेषं वा ते बिभराम्बभूवुः । यदन्वहं ते प्रत्यक्षमैक्षन्त एकैकं वस्तूद्भवति क्रमेण वर्धते अन्ततो नश्यतीति, तदेकवासनारूषितधियां नैव तेषां प्रसक्तिः काचिदाविरासीत् नित्यमपि किमपि स्यादिति मनसि कलयितुम् । एतावता इदन्तावत्सुव्यक्तं यदि वेदस्यापौरुषेयतावचनं वैदिकानां श्रद्धाजाड्येन वा प्रामाण्याभिनिवेशेन वा सर्वविस्रम्भस्वभावेन वेति मन्यते तर्हि परेषामपि तस्य पौरुषेयत्वकथनं विपरीतश्रद्धाजाड्येन वा अप्रामाण्याभिनिवेशेन वा सर्वाविस्रम्भस्वभावेन वेति । तत्र नान्यतरपक्षपातो विना प्रमाणं विमर्शकानां युज्यते । तत्रापौरुषेयत्वे किं प्रमाणम् ? पौरुषेयत्वे प्रमाणाभाव एव। न हि तत्र प्रत्यक्ष नवा शब्दः । अनुमानन्त्वप्रयोजकमिति स्वयं सूत्रकारः प्रतिपादयिष्यति ।

(2) भवतु तावदिदं यथातथा । सुनिश्चितमिदं यदविदितेदम्प्रथमताकात्कस्मादपि कालादाराभ्याद्यावधि गुरुमुखाद्वेदाध्ययनसम्प्रदायो विच्छेदरहितस्सम्प्रवर्तत इति । एकैको गुरुरध्यापनात्प्राक्

आचार्यस्तमध्याप्य अन्ते स्वगुरूपदिष्टं तस्मै उपदिदेश । तदुपदेशेऽयमप्येको विषयः यत्परमप्रमाणभूतो वेदोऽध्येतव्यो रक्षणीयो ज्ञेय इति । स्वभावोऽयं मनुष्यस्य यदिदं कर्तव्यमित्युक्ते वचनमिदं किम्प्रमाणं कथम्प्रमाणं करणे किं अकरणे किमिति जिज्ञासत इति । प्रतिशिष्यमेवं वेदम्प्रति जिज्ञासोदेतिस्म । स स आचार्यस्सोपपत्तिभिर्युक्तिभिस्तां शमयित्वा शिष्यस्य यथातृप्ति वेदप्रामाण्यं ग्राहयामास । एवं यथा शिष्याचार्यपरम्परया कृत्स्नो वेदः अद्यास्मत्पर्यन्तं समागतः एवमेतत्प्रामाण्यविचारः तदभ्युपगमः तदनुसारेणानुष्ठानमित्येतदपि अनादिकालप्रभृति तादृशपरम्परयैवास्मदवधि सम्प्राप्तम् ।

इत्थमनिदमादेः कालादसङ्ख्याता वंशपारम्परीरतिलङ्घ्य समागतं वेदप्रामाण्यमेकपदेऽपलपितुं न प्राञ्चोऽद्यतना इव पर्याप्त धैर्यशालिनोऽभूवन् । नैतावता मन्तव्यं श्रद्धान्धास्ते इति । स्वयमपि ते तत्रोच्चावचं विचारं प्रावर्तयन् । निरणैषुश्च सर्वन्तदुपपन्नमिति । न तु पुनरस्ति मात्रयाप्यवकाशः स्वहृदयविसंवादिनीं ते वाचमवोचन्निति वक्तुम् । विमृश्य विलोड्य अन्ततो निर्णीय वेदे सञ्जातसमधिकगौरवाः प्राञ्चस्सुमतयः, मास्म यथाश्रुतग्राहिणोऽपथं प्रतिपद्यन्तामिति मन्यमाना (3) हस्तमुद्धृत्य वेदप्रामाण्ये प्रतिज्ञामपि कुर्वते । यतो यथावदधीत्य सभक्तिश्रद्धाभरं प्रयुज्यमाना मन्त्रा अभिलषितानि फलन्ति स्म ततः पामरास्सितासितमतयोऽपि न तद्विषये संशयितुमपि पदमलभन्त । ऋग्विधाने शौनकस्य प्रवृत्तिं संविदानः को नामान्यथा वदितुमीहेत ।

देशपरम्परया समागतम् । तत्र बाधकप्रहाणेन उपपत्तिसम्पत्त्या च तदुत्तरोत्तरं स्थिरीकृतमिति प्रतिपादितं भवति । एतेन, मन्ये, अधस्तादुपक्षिप्तः प्रश्नः कियदवधि समाहितः । वैदिकसम्प्रदायं कात्स्न्येंन विरुन्धन् सम्प्रतितनानां विमर्शो यावन्तं सम्भ्रमं वैदिकानामुत्पादयेदिति सामान्यतो मनितं न तावतो न्यूनस्स्यात् साम्प्रतिकप्रक्रियाऽभ्यासपरिपचेळिममतीनां सम्भ्रमो यदि ते शृणुयुः यदत्र मया प्रत्यपादि । अथवा न ते सम्भ्रान्ताः स्युः अपितु परिहसेयुरेवंवादिनं यतस्तेषां दृष्ट्या निश्चप्रचमिदं यदप्रकम्पनीयो यथार्थभूतस्तेषां सिद्धान्त इति । एवंविधे विषये परोक्तमभ्युपगम्य प्राचामार्यपुरुषाणां, न केवलन्तेषां, तत्र भवतो वेदस्यापि, शून्यहृदयत्वं अलौकिकेष्वर्थेषु अप्रामाणिकत्वं चोररीकर्तुं निर्बद्धाः स्मः । नैतावता फलति अविचार्य ऐतिह्यं ग्राह्यमन्यत्त्याज्यमिति । अपितु निवेद्यते, भारताभिजन आस्तिकम्मन्य एकैको जनः स्पृहयति वेदस्यापौरुषेयत्वे अपवादकथागन्धवर्जितमैककण्ठ्यं भेजुषां प्रमाणानां को नामाशयः ? वेदस्य तथात्वं प्रामाण्यहेतोरारोपितमिति किमसौ प्रमाणानुग्राह्यो विषयः ? पौरुषेयत्वे वा कान्यनन्यथासिद्धानि प्रमाणानीति विशिष्य विचारयितव्यमिति ।

अयमियानंशः वेदमुपजीव्य प्रवृत्तं पुराणप्रभृतिकं प्रबन्धजातं परिशीलयतो बुद्धिगोचरः । सम्प्रति वर्तमानेषु पुराणेषु यद्यपि प्रक्षेपा असङ्ख्याताः सुस्पष्टमवगम्यमानास्तत्प्रामाण्यं मनाक् शिथिलयन्तीत्यस्ति शाङ्कितव्यं तथाऽपि तत्रैकैकोंशः वेदप्रामाण्योपोद्धलनाय प्रवृत्त इति आपातप्रतीतेरपि गोचरीभूतोऽयमर्थः । अद्यत्वे

विमर्शे यनमानानामपि नैतद्विमतं यत्कुहचित् प्राक्तन एव काले आर्यैर्वेदस्य सुदृढं प्रामाण्यमास्थितमिति ।

एवमनन्याधीने अनपवादार्हे प्रामाण्ये वेदस्याङ्गीकृते स यत्र विषये यमेव पन्थानन्निर्दिशति स एवार्याणां नियोगतोऽनुसर्तव्य आसीत् । इह परत्र वा लोके उपयुक्तं यद्यथा कर्तव्यमित्ययमाह तत्तथा ते सुखसाध्यं कृच्छ्रसाध्यं वा सर्वमन्वतिष्ठन् । कार्त्स्न्येन स्वातन्त्र्यं वेदस्य कार्त्स्न्येन पारतन्त्र्यमात्मनश्च ते आकलयाम्बभूवुः । (4) कल्पादौ जगदखिलं स्रष्टुं प्रवृत्तस्य भगवतो विरिञ्चेरपि मातृकाभूतोऽयं वेद इति तेषामध्यवसाय इति चेत् स्वानुष्ठेयकतिपयकर्मसु वेदस्य नेतृत्वं कियता गौरवेण तेऽभिसंहितवन्तः स्युरित्यनायासेन प्रतीयेत ।

अनेन वेदेन विहितेषु अवश्यानुष्ठेयेषु कर्मसु सर्वादिभूतन्तावदिदं यद्वेदोऽध्येतव्य इति (5) । तेन एकैकेन द्विजन्मना वैदिकीं सरणिमातस्थुषा यथाविधि नियमेन वेदोऽध्येतव्य आसीत् । यो नाध्यैष्ट स व्रात्योऽमन्यत (6)। योऽनधीतवेदस्तस्य वाचोऽपि दुर्जाततामवबोधयितुं ऋगेव साक्षात्काचित्प्रवृत्ता (7) । न केवलमक्षरराशिमात्रग्रहणरूपमध्ययनमात्रं फलाय । अर्थोऽपि तस्य सम्यक् ज्ञातव्य इति विध्यन्तरमाह (8) । एतदनुसृत्य चिराय द्विजातिस्सन् सर्वोऽपि प्रथमं वेदतदर्थज्ञानं सम्पादयन्नास्त । न केवलं विधिरस्तीति, अपितु विद्यां विना जगदेव शून्यम्भवेदिति प्राचामियान्परिश्रमः । सर्वथाऽबाधितां प्रमाणभूतां कामपि विद्याव्यवस्थां विना हि अन्वहमन्यथा-

समाचारः प्राचीनैरार्यपुरुषैर्मनसि सम्यक् परिकलितः । मितविषया मनुष्याणां शेमुषी अत्यन्तं पारिप्लवा प्रायः कोपकलुषा आग्रहशबला भ्रान्तिबहुला च । स्वातन्त्र्येण प्रवृत्तौ नैकस्य पन्थानमपरोऽनुरुन्धानो दृश्यते । कथमपि ऐहिके समाचारे प्रवर्तमानेऽपि पारलौकिकं किमपि मनसाऽपि स्प्रष्टुं न कश्चित्प्रभविष्णुः । मतिविभवभेदेनानुमानानि न व्यवतिष्ठन्ते । एवन्दुष्परिहरा महती वैयाकुली मास्म भुवि पदन्निधत्तेति एतादृशविद्यासम्प्रदायो जगति चिराय संप्रवर्तते । रहस्यमिदमजानन्तोऽनुमानकुशलम्मन्या मास्म वेदमभि पराक्रमन्तामिति मन्वानाः प्राञ्चो न तथा कर्तव्यमित्युपदिशन्ति (9)।

उक्तमिदं यन्न विधिवशादेव केवलं, अपि तु लोकयात्राव्यवस्थायै विद्याया आवश्यकतां पश्यन्तश्चिराद्विद्यासम्प्रदायं अविच्छेदेन प्रवर्तयन्तीति (10)। शब्दान्तरेभ्यो वेदाभिधानस्य कश्चिदस्ति विशेषः । अन्यत्राभिसंहितार्थप्रकाशनाय शब्दप्रयोगः । तत्रार्थः प्रधानभूतः । तत्प्रतिपादकश्शब्दस्तु तदुपसर्जनीभूतः । वेदे पुनस्समप्राधान्यं शब्दार्थयोः । शब्दसामान्यस्यार्थप्राधान्ये साधारणे वेदशब्दे तस्यापि समं प्राधान्यमिति विशेषात् वेदश्शब्दप्रधान इति व्यवहारः । यस्य शब्दस्य यथा स्वरः यथाऽऽनुपूर्वी तस्य तथोच्चारण एव मन्त्रः फलाय कल्पते । सत्स्वपि पर्यायेष्वर्थानुसारेण तदुच्चारणे न तत्फलं भवतीति शब्दप्राधान्यमुपपादयन्ति । मन्त्राणां फलविशेषप्रसवसमर्थतायां यतस्तेषामचञ्चलः प्रत्यय आसीत् ततः प्राञ्च आर्याः तान्मन्त्रान् यथावत् यथाविध्यभ्यस्य धार-

येन लिखितपाठः प्राचीनेष्वार्यपुरुषेषु न पदमलभत । लिखित्वा पठन्तो हि प्रायेण स्वरवर्णादिकं यथावदुच्चारयितुं न प्रभवन्ति । लेखनप्रमादोऽप्यत्यन्तं विपर्यासमापादयति । ईषदप्यन्यथाभूतो मन्त्रो न फलतीति जानन्तः(11) कथमत्यन्तविपर्यासहेतुभूतं लिखितपाठमाद्रियेरन् । कथं वा न बहिष्कुर्युः । अपिच पुस्तकस्थेन सन्दर्भेण न ते पाण्डित्यं परिपूर्णममन्वत(12)। विधेरतिलङ्घनाद्बिभ्युश्च। एतैः कारणैः प्राचीना आर्या अत्यन्तं श्रद्दधाना ईषदप्यन्यथाभावो मा प्रसाङ्क्षीदिति जागरूका यथाक्रमं वेदमधीत्य तदर्थं सम्यक् परिज्ञाय यथोक्तं सर्वमनुतिष्ठन्तो बभूवुः ।

अथ परिवर्तिनि कालचक्रे सोऽपि हि कालो नियतो यत्र क्रमान्मनुष्या बलेन बुद्ध्या आयुषा श्रद्धया भक्त्यादिभिश्च दरिद्राणा भवन्ति । एतदवलोक्य तदानीन्तनाः सुमेधसो वेदाधिगमसम्प्रदायस्य विलोपं शङ्कमाना लक्षणग्रन्थान् प्रवर्तयामासुः । यथाऽर्थस्तथा शब्दोऽपि वेदे प्रधानभूत इति तस्यापि परिरक्षणे तेषां समान उद्यम आसीत् । तत्र प्रतिवर्णं स्वरस्थानमात्राप्रभृतिकं विविच्य प्रतिपादयितुं प्रवृत्ता शिक्षा । अस्या एव पर्यायः प्रातिशाख्यमिति । प्रकृतिप्रत्ययनिरूपणपुरस्सरं पदनिष्पादनव्यापृतं व्याकरणम् । येषु वृत्तेषु मन्त्रा निबद्धास्तानि निरूपयितुं छन्दोविचितिः । एवममी त्रयस्सन्दर्भाः वर्णं तत्समुदायं पदं तत्समुदायं वृत्तमपि विस्पष्टमवबोध्य वैदिकीमक्षरानुपूर्वीमनपायं परिरक्षितुं प्रावर्तन्त । तथा अर्थव्यवस्थोपयोगिनस्त्रयः । तत्र पदार्थनिर्धारणोपयुक्तं निरुक्तम् । पदार्थविशेषस्य कालरूपस्यावधारणाय ज्यौतिषम् । विना व्यामोहं सन्देहं

वा यथा विहितं कर्म सम्यगनुष्ठीयेत तथा निष्कृष्य कर्मणः प्रयोगं परिदर्शयितुं कल्पः । षडिमानि वेदस्याङ्गान्यभिधीयन्ते । नूनमिमानि विना शब्दान्तरस्य भाषान्तरस्य वा साधारणो विपरिलोपो वेदस्याप्युपरि सुबहु पराक्रान्तवान् स्यात् । अकल्याणप्रकृतेरशोभनदन्तोष्ठस्य अप्रगल्भस्याविनीतस्य सुखार्थिनो निद्राळोर्वेदाध्ययनेऽनधिकारमाहुः शिक्षाकाराः[13] । स्पष्टमितो ज्ञायेत कियानादरः कियद्गौरवं तेषामासीद्वेदे कियती वा मात्रा तेषान्तत्परिरक्षणे जागरूकताया इति ।

एतावतामङ्गानां सहकारेणापि अर्थवादबहुलस्यातिविस्तृतस्यातिगम्भीरस्य वेदस्यार्थः अकुशाग्रबुद्धीनाञ्च बुद्धिमनायासेनारोहतीति विधेयार्थो धर्मशास्त्रद्वारा स्पष्टं प्रत्यपादिषत । वेदस्य कश्चिदेष स्वभावः यत्कर्म किमपि कर्तव्यमिति विधाय तत्र सन्तमसन्तं वा कमपि हेतुं प्रतिपादयति । तमेतं वेदभागमर्थवादमाहुः । विधिभागे धर्मशास्त्रेण निष्कृष्यावबोधिते अर्थवादभागमवलम्ब्य सविस्तरं सुहृदुपदेशक्रमेण वेदार्थमुपन्यस्य तत्र लोकानामभिरुचिमभिवर्धयितुं पुराणमप्यात्मानमाविरकार्षीत् । आचार्यान्तेवासिपरम्परया इत्थं वेदे तत्प्रामाण्ये तत्स्वरूपतदर्थविवेचनसाधनसमुदाये सर्वस्मिन् समागतेऽपि अवैदिकेषु वेदप्रामाण्यमाक्षिपत्सु किं कर्तव्यम् । तदप्रतिसमाधाने हि तत्प्रामाण्याङ्गीकारः श्रद्धामात्राधीन इति पर्यायेणाभिहितं स्यात् । इत्यस्यां स्थितौ प्रमाणाप्रमाणविवेकस्यावश्यकता सर्वैरमानि । तामेतामपेक्षां परिपूरयितुं न्यायविस्तरस्समुदियाय । इमानि त्रीण्युपाङ्गान्युच्यन्ते ।

अङ्गानि षट् उपाङ्गानि त्रीणि आहत्य नव, विना वेदात्मकानि चत्वारि, धर्मविद्यास्थानानि । इयत्याऽपि साधनसम्पत्त्या न सकलवेदार्थभूतधर्मप्रमितिः सन्देहसंस्पर्शविनिर्मुक्ता सञ्जायते । न वर्णे न पदे न पदार्थे संशयः यतस्तत्र शीक्षादीनि निरुक्तान्तानि जाग्रति । परन्तु तानि तत्रैव विश्रान्तानि न वाक्यार्थनिर्णये व्यापरितुं क्षमन्ते । निर्णीते वाक्यार्थे तदनन्तरमेव शक्यप्रवृत्तीनि इतराण्यपि न तत्रालम् । न्यायविस्तरस्य त्वत्र विषये औदासीन्यं विस्पष्टम् । अपिचैतेषां वाक्यार्थनिर्णयोऽपि समानयोगक्षेमो वैदिकेन । अर्थशून्यानीव काचिद्वाक्यानि समुपलभ्यन्ते । विरुद्धानीव मिथः क्वचित्प्रतिभान्ति । व्याहतार्थानीव कुत्रचिद्दृश्यन्ते । शास्त्रान्तरशातितमतिरपि हि एतादृशस्थले बलात्सन्देहं नीयते । कथमेष सन्देहोऽपनीयताम् । भिन्नाभिन्नतात्पर्यपरिकल्पनया विरुद्धवदवभासमानानां वाक्यानामर्थनिर्णयः कर्तुं शक्यते, संशयव्युदासोऽपि । कथं पुनस्तात्पर्यविशेषावगमः ? नायमबहुज्ञानां सुलभः । सत्यमुपदेशपरम्परया निष्कृष्टो वाक्यार्थोऽपि समधिगतः । तथापि तत्रोपपत्त्यन्वेषणे बुद्धिवैचित्र्येण जायमानस्संशयः कथं शपथेन निवार्यताम् । एतत्परिजिहीर्षया साकल्येन व्याख्यानमिति सर्वथा दुष्करमिदं कार्यम् । तथा व्याख्याने वा तदुपष्टम्भका न्यायाः प्रदर्शयितव्याः । एवं यदि, न्यायनिरूपणेनैव सर्ववाक्यार्थनिर्णयसम्भवे कृतं विस्तृतेन व्याख्यानेनेति महती अपेक्षा वेदवाक्यार्थनिर्धारणोपयोगिनः कस्यचिन्न्यायनिबंधनस्याजायत ।

अस्य हेतोः प्रवृत्तं तादृशन्यायनिबंधनात्मकं मीमांसाशास्त्रं वेदमनुप्रवृत्तेषु धर्मविद्यास्थानेषु दशमं बभूव ।

---



॥ श्रियै नमः ॥

# विद्यास्थानाधिकारो द्वितीयः ।

इदमधिगतं यत् वेदतदर्थाधिगमे सर्वथाऽवश्यसम्पादनीये सं
से तत्र कालक्रमेण विपर्यासलवो मा प्रसजदित्येतस्मिन्नर्थे ऐदम्प
वहन्ति शीक्षाप्रभृतीनि मीमांसान्तानि दश विद्यास्थानानि प्रावर्तन्तेति
तत्र प्रथमं विद्यास्थानान्तररहितं वेदमात्रं कदाचिदासीत् । पश्च
क्रमेण एकैकशः अङ्गान्युपाङ्गानि चाविरभूवन्निति नैतत् भारतीय
प्राञ्चो वैदिकाः सन्मन्यन्ते । धर्मप्रमितये प्रवर्तमानो वेदः सर्वदा
परिकर एव बभूवेति तेषामाशयः । तत्र त्वयं विशेषः—कदा
दपि क्वचिदपि किञ्चिदप्यन्यथाभावमनधिगच्छन् सर्वदा एकरू
वेदः प्रवर्तते । नैवमङ्गोपाङ्गानि भवन्ति । पाणिनीयात् प्राक् अन
दीयं व्याकरणमासीत् । ततः प्रागन्यदीयं ततः प्रागन्यदीयमि
भिन्नभिन्नकर्तृकाणि पूर्वपूर्वोपमर्देन जातानि बहून्यनित्यानि व्याकर
निबन्धनानि । एवमन्यान्यप्यङ्गोपाङ्गनिबन्धनानि । एवं प्रत्येकं
तन्निबन्धनस्यानित्यत्वेऽपि व्याकरणादिसामान्यशून्यः कश्चित्का
नास्ति । तेन स्वरूपेण वेदवत् प्रवाहतो विद्यास्थानान्तराण्यपि
त्यान्येवेति निरूपयन्ति ।

वेदेषु सर्वेषामेव विद्यास्थानानां नामान्युपलभ्यन्ते [1] ।
वेदकाल एव प्रसिद्धरूपाणीमानीति वक्तव्यं भवति । एवं सति वे
स्य य आदिः स एव विद्यास्थानान्तराणामपीति न कस्यापि विद्
स्थानस्य इदानीमुपक्रम इति वक्तुं शक्यते । वेदेषु इतिहासः पुरा

मिति श्रवणं वेदस्यैव भागविशेषमभिप्रेत्य यत्र पुरुषविशेषचरितादि वर्ण्यते । न तु तदतिरेकेण पृथक्स्थितं विद्यास्थानमभिप्रेत्येति यद्यपि शङ्कितुं शक्यम् ।[2] कुमारिलोऽपि हि व्याकरणाधिकरणे तथा वदति । तथाऽपि तन्नातीवोचितम् । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति चतुर्णां वेदानां कीर्तनेनैव हि तदन्तर्गतानां शीक्षाव्याकरणादीनामप्युपादानं कृतं भवति । तत्र पुनरपि शीक्षा व्याकरणं निरुक्तं छन्दो ज्योतिषमिति पृथक्कथनमनुपपन्नं भवति । तेन यथा ते चत्वारो वेदाः परस्परभिन्नाः नत्वेकैकस्मिन् वेदे ऋगप्यस्ति यजुरपीति एकस्यैवाखण्डस्य वेदस्यामी एकदेशा इत्युच्यन्ते तथा तैस्सह पठितानां शीक्षादीनामपि पृथग्भाव एवोचितः । समभिव्याहृतार्थान्तरानुरोधेन हि निर्णयः कर्तव्य इति मीमांसायामेव न्यायः कश्चिदस्ति[3] । किञ्च चतुरो वेदान्निर्दिश्य इतिहासपुराणस्य पञ्चमत्वं क्वचिदभिधीयते[4] । न खल्वितिहासपुराणयोर्वेदैकदेशत्वे स्वरसतो वेदाश्चत्वारः इतिहासपुराणं पञ्चममिति वक्तुं युक्तम् । तस्मात् वेदेषु शीक्षादीनां नामान्युपलभमानास्तत्र वेदातिरिक्तानि विद्यास्थानान्तराण्येवाभिसंहितानीति मन्यामहे ।

एवं सति वेदस्य नित्यत्वं वदद्भिः विद्यास्थानान्तराणां प्रवाहतो नित्यत्वमवश्यमभ्युपगन्तव्यं भवति । तदनित्यत्वे तु यत्र तानि विद्यास्थानानि कीर्त्यन्ते स वेदभागस्तान्यपेक्ष्यार्वाचीन इत्यनुक्तिसिद्धम् । एवमपि सम्प्रति विद्यमानानां शीक्षाद्यङ्गोपाङ्गनिबन्धनानां न कस्यचित् यं कमपि वेदमपेक्ष्य प्राचीनत्वं वक्तु शक्यम् । तदिद-

नविशेषपरो मीमांसाशब्दो न्यायशब्दश्च प्रथमं सुबालोपनिषदि दृश्यते। शास्त्रविशेषाणां पुरुषविशेषाणां च नामानि प्राचीनग्रन्थेषु सुसूक्ष्ममन्विष्यन् वीबर् मीमांसाशब्दः प्रथमं शतपथब्राह्मणे प्रथमदशमकाण्डयोर्दृश्यत इति लिखति[5]। तत्र दशमकाण्डो न मे लभ्यते। प्रथमकाण्डे तु सत्यं मीमांसाशब्दो दृश्यते। परन्तु तत्र तस्य शब्दस्य केवलविचारोऽर्थः न शास्त्रविशेषः। एवमर्थान्तरपरं मीमांसाशब्दं न केवलं शतपथे किन्तु काठकेऽपि पश्यामः। गोपथब्राह्मणे 'अनूचानो मीमांसकः' इति कस्यचित् पुरुषस्य विशेषणं क्रियते[6]। तत्र तु मीमांसक इति विशेषणेन केवलं वेदार्थकुशल इत्यभिसंहितमित्येतमर्थमपेक्ष्य विद्यास्थानविशेषे शिक्षितमतिरित्ययमर्थो युक्ततरो भाति। एवं चेत् न केवलमुपनिषत्सु ब्राह्मणेष्वपि तु मीमांसेति विद्यास्थानं प्रसिद्धमिति वक्तुं शक्यम्। पुराणेषु महाभारते मनुयाज्ञवल्क्यादिस्मृतिनिबन्धनेषु तैत्तिरीयप्रातिशाख्ये व्याकरणमूलग्रन्थेषु च शास्त्रविशेषपरो मीमांसाशब्द उपलभ्यते।

एवं प्रमाणान्तरानुसारेण विद्यास्थानान्तरवत् मीमांसायाः प्रवाहनित्यत्वप्रतीतावपि मीमांसासूत्रमात्रपर्यालोचने ततः पूर्वं समानजातीयं निबन्धान्तरमासीदिति न निश्चेतुं शक्यते। यन्मीमांसासूत्रेषु कतिपये आचार्यास्सङ्कीर्त्यन्ते तेन ते जैमिनेः प्रागेतच्छास्त्रप्रबन्धारः स्युरिति दृढमभिधीयेत नाम यदि तेषां प्रबन्धानवलोक्यैव जैमिनिस्स्वसूत्रेषु तेषां मतविशेषं सूत्रयामासेत्ययं निर्बन्धः स्यात्। ते हि जैमिनेस्समानकालिकास्सन्तो यज्ञशालासु वादगोष्ठीषु वेदार्थव्याख्याने प्रसक्ते स्वं स्वमभिसन्धिमाविष्कृतवन्तः

स्युः । असमानकालिका अपिवा कल्पसूत्राणि वा साक्षाद्वेदभाष्याणि वा विरचितवन्तः किन्न स्युः यतो जैमिनेस्सुखपरिज्ञेयस्तेषामाशयो बभूव । अपिच भाष्यारम्भे शबरस्वामी स्वयमाह न किमपि पदं जैमिनिसूत्रेषु पारिभाषिकमिति । यदि हि वेदकालमारभ्य पृथग्विद्यास्थानत्वेन परिगणितं सदिदं शास्त्रं भिन्नभिन्ननिबन्धात्मनाऽनुपलब्धेयत्ताकमतिमहत्कालव्यवधानमतीत्य जैमिनिमुपागतं स्यात् कथं शास्त्रान्तरेष्विवात्रापि परिभाषाप्रकरणं किञ्चिदपरिहार्यमापतितं न भवेत् । अन्यदपि । जैमिनेस्सर्वथाऽर्वाचीनस्य कात्यायनस्य श्रौतसूत्रेषु विचारप्रक्रियाऽनेकत्र मीमांसासध्रीची सन्दृश्यते । नैवं ततः प्राचीनतया सम्भाव्यमानेषु । अतो मीमांसासरणिरियमनन्यक्षुण्णा महर्षिजैमिन्युपज्ञमिति निश्चेतुन्नातीव बाधकमस्तीति ।

मीमांसा नाम पूजितविचार इत्याहुः[7] । न हि भारताभिजनानामार्याणां वेदादपि पूजिततरः कश्चिदस्ति । अतो वेदार्थविचारं प्रति प्रवृत्तमिदं विद्यास्थानं निरुपसृष्टेन मीमांसापदेन व्यवह्रियते । एतदनन्तरं बादरायणेन वेदान्तोपनिषदपरनामधेयानां ब्रह्मप्रतिपादकानां वेदभागानामर्थनिर्धारणाय न्यायनिबन्धनान्तरे कृते वेदार्थविचारतया तस्यापि मीमांसात्वे समाने ततो व्यावृत्तये जैमिनिकृतस्य न्यायनिबन्धनस्य पूर्वमीमांसा कर्ममीमांसा धर्ममीमांसेति व्यवहाराः प्रावर्तन्त । अथापि तु बादरायणीयस्य वेदान्त इति जैमिनीयस्य च केवलं मीमांसेति बहवो व्यवहारं कुर्वन्ति । अनेकार्थकतया शास्त्राणां सामान्येन वाचकतया च प्रसिद्धमपि तन्त्रपदं

विशेषतो मीमांसावाचकमपि दृश्यते । 'तत्सुतस्तर्कवेदान्ततन्त्रव्याकृतिचिन्तकः' इति विश्वगुणादर्शोपक्रमे वेङ्कटाध्वरी ।

मल्लिनाथादीनां प्राचीनानां प्रसिद्धानां पण्डितानां पदवाक्यप्रमाणपारावारपारीण इति बिरुदमासीदिति तत्तद्ग्रन्थसमाप्तिलेखनाद्वगम्यते । तत्र पदमिति व्याकरणं प्रमाणमिति गौतमीयं न्यायशास्त्रं वाक्यमिति जैमिनीयं मीमांसाशास्त्रं चाभिसंहितम् । अत्र हि वेदवाक्यानामस्मिन्नर्थे तात्पर्यमिति निर्धारणाय न्याया निरूप्यन्ते । तस्मादर्थविशेषप्रतिपादकवाक्यविवेचनप्रवृत्तत्वात् अस्य विचारशास्त्रस्य वाक्यमिति व्यवहारो युज्यते ।

अथाद्यत्वे तर्कव्याकरणवेदान्तमीमांसानां सार्वत्रिकी चतुश्शास्त्रीति प्रसिद्धिर्दृश्यते । तत्र शास्त्रन्नाम तत् येन पुंसां प्रवर्तनं वा निवर्तनं वा क्रियत[8] इति स्वरसतः प्रतीयमानमर्थमनुरुध्य तत्र भवान् वेदः शास्त्रम् शासनाविशेषाद्धर्मशास्त्रमपीति तदन्येषां शास्त्रत्वमनुपपन्नमिव । यथा न्यायवैशेषिकसूत्रवृन्देनात्मानात्मविभागो यथा वा पाणिनिसूत्रजातेन साध्वसाधुशब्दविवेकः तथा मीमांसाभिधानो वेदार्थविचारो जैमिनीयेन सूत्रजालेन सम्यक् ज्ञाप्यत इति कथङ्कारं प्रवृत्तिनिवृत्त्युपदेशरूपत्वमनुमन्येमहि । अथ, अयं विचार इत्थं कर्तव्यो नेतरथा, अत्र विचारेऽयं न्यायोऽनुसर्तव्यो नेतर इत्युपदेश एव तात्पर्यात् शास्त्रत्वन्न विहन्यत इति यदि, किमिदानीं काव्यान्यपि शास्त्राणि येषां घण्टाघुष्टमिदं यत् 'रामादिवद्वर्तितव्यं न रावणादिव' दित्युपदेश एव तात्पर्यमिति । अत्राहुः । एवं सत्यप्यस्मिन्नंशे समाने काव्यानां मानसोल्लासेन कालयापनप्राय-

लौकिकैकप्रयोजनतया, परेषाञ्च परमगहनतयाऽलौकिकार्थबोधवैयाकुलीप्रशमनैकफलकतया चैतेषामेव शास्त्रत्वन्न काव्यानामिति युक्तमिति । शास्त्रपदं विद्यास्थानविशेषेषु रूढमिति पक्षे न किञ्चिद्विचारणीयम् ।

अथेदं विदितचरन्नः यत् षड्दर्शनसमुच्चयं सर्वदर्शनसङ्ग्रहं नवीनगणनामपि वाऽनुसृत्य जैमिनीयमपि शास्त्रं दर्शनपदमारोपितमिति । तत्र तद्दर्शनं यदात्मदर्शनोपायप्रतिपादनैदम्पर्येण प्रवृत्तमिति केचित् व्युत्पादयन्ति । तथाचेद्यागादिरूपवेदार्थविचारतत्परमिदं जैमिनीयं कथन्नाम दर्शनं स्यात् ? विचारप्रक्रियायामत्र विद्यमानश्चातुरीभरः रामणीयकातिशयो वा दर्शनान्तरैरस्य समानस्कन्धतां सम्पादयामासेति माक्स्मुल्लर् आह [१] । सर्वदर्शनसङ्ग्रहे पाणिनीयमपि प्रतिपादयन्माधवः तदप्येकन्दर्शनमित्याशेत इति भाति । तत्र माक्स्मुल्लर्-अस्य युक्तिर्न शक्नोति प्रसर्तुम् । तदेतादृशविषये दर्शनव्यवहारस्य प्रायेणैतन्निमित्तं भवेत्—यद्यपि सूत्राण्यन्योद्देशेन प्रवृत्तानि तथाऽपि तद्व्याचिख्यासयाऽवतरन्ति भाष्यवार्तिकादीनि सूत्रव्याख्यानव्यवस्थापने नान्तरीयकतया तदनुगुणं पदार्थजातं निरूपयितुमारभमाणानि आत्मानात्मविवेचने व्याप्रियन्ते । एवं व्याख्यानानां दर्शनत्वप्रतीतौ ‘सूत्रेष्वेव हि तत्सर्वं यद्भाष्ये यच्च वार्तिके’ इति न्यायेन सूत्राण्येव दर्शनमिति साङ्गिरन्ते—इति । स्मरामि श्रुतपूर्वं मे कदाचिद्विदुषां मुखात् दृष्ट्वा दृष्ट्वा पदार्थान्निर्धार्य तन्निरूपणाय यत्प्रवर्त्यते तद्दर्शनमिति । वस्तुत एवंकृत्वैव प्रवृत्तिर्न्यायवैशेषिकयोरिति सुस्पष्टं पश्यामः । एवं यदि, सर्वथा तावत्स-

म्यगिदं यन्मीमांसाऽपि दर्शनमिति, यताश्चिराय वेदार्थनिर्णयेऽनुसृता-न्न्यायान् दर्शन्दर्शमवधार्य महर्षिर्जैमिनिः स्वसूत्रेषु तान्निबबन्ध ।

अथेदमधिकारसमापनात्पूर्वं किञ्चिदालोच्यते । यदाहुर्मीमांसेयं वेदस्योपाङ्गमिति तदेतत् कियदवधि प्रामाणिकमिति । योऽयमङ्गमुपाङ्गमिति विभागः किन्तावदेतस्मिन्नियामकमाद्रियते ? आपातदृष्टिस्तावदेवं प्रतीयात्– अङ्गमिति तदुच्यते यद्वेदस्य स्वरूपपरिज्ञाने तदर्थप्रमितौ वा साक्षादुपयुज्यते, यथोक्तं प्राग्वैदिकवर्णपदवृत्तपरिच्छेदपराणि शीक्षाव्याकरणछन्दश्शास्त्राणि पदार्थतद्विशेषप्रयोगव्युत्पादनप्रयोजनानि निरुक्तज्यौतिषकल्पसूत्राणीत्यमूनि षडङ्गानीति । एवमेतस्मिन्नुभयस्मिन्नपि साक्षात्प्रयोजने औदासीन्यं बिभ्रत् यत्तात्पर्यगत्या वेदार्थोपबृंहणाय प्रवृत्तं यथा पुराणप्रभृतिकं तदिदमुपाङ्गमभिधीयते–इति ।

इत्थन्तु कथ्यमाने सेयं मीमांसा सर्वथा उपाङ्गभावमतिलंङ्घ्य वर्तते । सर्वेष्वपि किलाङ्गेषु वैदिकपदपदार्थमात्रप्रतिपादनेनोपरतेषु शङ्काकलङ्कसंकुले निगमार्थे मीमांसा स्वयन्तत्र प्रवर्तमानाऽपाकृत्य सन्देहसन्दोहमशेषमर्थमतिविशदमवभासयति । एवं वेदेन तदर्थे बोधयितव्येऽव्यवहितत्वेन चरमसाधनीभूता मीमांसाऽङ्गेभ्योऽप्यभ्यर्हिततरं पदमर्हतीति वेदार्थचिन्तापरा मन्वीरन् । अतएव वेदस्य धर्मप्रमितिकरणभूतस्येतिकर्तव्यतां मीमांसाम्[10] व्यपदिशन्ति । फलं साधयितुं प्रवर्तमानस्य करणस्य यदुपकरोति सा हि इतिकर्तव्यतोच्यते । एवम्भूते समाचारे किन्तावत्कारणं भवेत् यदुपाङ्गेषु मीमांसां गणयन्ति ? तत्रेदं स्यात्–तत्र तत्र विद्यास्थानगणनाप्रसङ्गे शीक्षाप्रभृतीनि

षडेवानेकत्र परिकीर्तितानि । यद्यपि षडिति न श्रुत्या तेषां षट्त्वं यत्र क्वचिदप्युक्तम् तथाऽपि यानि यावन्ति कीर्तितानि तेषान्तावत्सङ्ख्याकत्वमेवेत्यौत्सर्गिकोऽयं वेदसम्प्रदायानुरोधी नियमः[11]। तेनाङ्गानां षट्त्वं व्यवस्थितमेवेति सुस्पष्टं प्रतीयमानतया नाहमवकाशं पश्यामि यत् माक्सूमुल्लर् पृच्छति कुत्राङ्गानि षडिति प्रतिपादितमिति[12]। एवमङ्गसङ्ख्याव्यवस्थितौ वेदमुपजीव्य प्रवृत्तानि विद्यास्थानान्तराण्युपाङ्गानीति व्यवजह्रिरे । सोऽयं व्यवहारो यथा पुराणधर्मशास्त्रन्यायविस्तरान् तथाऽङ्गेष्वनन्तर्भावाविशेषान्मीमांसामप्यात्मनो विषयीचकार । तत्वतो विद्वांसो विमृशन्तु कियदन्तरं मीमांसाया इतरेषामुपाङ्गानाञ्चेति । वेदेन धर्मे प्रमापयितव्ये न पुराणं न धर्मशास्त्रं न न्यायविस्तरोऽल्पिष्ठयाऽपि मात्रयोपयोगं लभते । मीमांसा त्वङ्गेष्वपि कियन्तमुपकारमाधाय दूरादुदासीनेषु यावन्निर्विशङ्कमागमार्थोऽवधार्यते तदवधि व्याप्रियते । तस्मात्, न केवलमुपाङ्गेभ्य एव, अपि त्वङ्गेभ्योऽपि सर्वेभ्योऽभ्यर्हिततरं पदमियं मीमांसाऽर्हतीति, विश्वसिमि, नैतद्विवेचका विमन्येरन् । यत्तु परापरविद्याविभागे न मीमांसाया उपादानं न तत् पुराणादीनामिव बहिरङ्गतया, अपितु वेदोपादानेनैव तदितिकर्तव्यतारूपा मीमांसाऽप्युपात्ता भवतीति न पृथगुपादानस्यावश्यकतेत्यभिप्रायेण । अतएव मीमांसाया वेदादभेदं दृष्टान्तविधया न्यायाचार्योऽपि स्वयङ्कीर्तयति[13]। स्मृतिविशेषमपि कुमारिल उपादत्ते यत्र मीमांसाया वेदत्वमेव साक्षादभिहितमस्ति । यद्व्याकरणं मुख्यमङ्गं ब्रुवते न तत्तस्य प्रधानतया। किन्तु शब्दप्रधानस्य वेदपुरुषस्य शब्दसंस्कारकं व्याकरणं मुखमिति प्राचां संव्यवहारमनुसृत्य

मुखे भवं मुख्यमिति । तदेवं धर्मप्रमितौ वेदस्यानन्तरप्रधानभूता मीमांसेयमावेदाविर्भावं निबद्धाऽनिबद्धा वा चिरायानुवर्तमाना जैमिनिमाजगामेति जानन्तस्ततःप्रभृति कदा कान् सम्प्राप्य कथमभिवृद्धेति यथाशक्ति यथाप्रमाणं किञ्चिदालोचयेम ।

---






॥ श्रीः ॥

# प्रबन्धृप्रबन्धाधिकारस्तृतीयः ।



पाश्चात्यैर्भारतीयान् प्रति कथ्यमानासु न्यूनतासु इयमन्यतमा यदिमे प्राचीनचरितदरिद्रा इति । अधिपाश्चात्यपद्धति शिक्षितमतयस्तामिमां तथेति प्रतियन्ति। परे तु पश्यन्ति— न चरितं चरितमित्येवापेक्षितम् अपितु प्राचां कुलपुरुषाणां गम्भीरारम्भबहुलं धर्माचरणजटिलं न्यायनिर्भरं चरितमसकृत् श्रुतपठितं तत्सन्ततिभवानपि तथाविधान् विदधीत यथा ते तादृशेष्वेव व्यापारेषु दत्तदृष्टयः सोत्साहास्सति पथि प्रवर्तमानाः स्वस्य स्वदेशस्य स्वजनानाञ्च श्रेयसे कल्पेरान्नित्येवमर्थं चरितमपेक्षितम् । इदंकृतेऽवतीर्णानि कति कति न सन्ति भारतवर्षेऽस्मिन्निबन्धनानि । सन्ति परश्शतं वा परस्सहस्रं वा । इत्थं चरितस्य यत्प्रधानम्प्रयोजनं तदनुगुणे निबन्धजातेऽत्यन्तं पुष्कले सति किन्तत्राप्रतिपादितेन प्राचां वर्षस्य मासस्य दिनस्य घटिकाया वा इदंत्वेन ? ये तेषां वृत्तान्ताः प्रतिपाद्यमाना अनन्तरजानां प्रवृत्तिन्निवृत्तिं वा प्रत्युपदेशाय कल्पन्ते ते समग्रन्निबद्धास्सन्ति । तथासति किन्तेषां प्राचीं प्रति प्रतीचीं प्रति वा गमनेन स्थितेनासितेन वाऽनिबद्धेनापरिज्ञातेन वा नो हीयते ? न वयं सन्नद्धा अपलपितुं यत्प्राचीनपुरुषकथाप्रसङ्गे कदा कथं कुत्र ते बभूवुरिति सार्वत्रिकन्तावत्कुतूहलमुदेतीति तन्निवर्तनायोपयुज्यते तेषां कालो गतागतं देशो वा विशिष्य विज्ञायमान इति । परन्तु चरितप्रबन्धृणान्नेदं तथाऽऽवश्यकप्रतिपादनं यथाऽप्रतिपादने दूषणाय पदन्दत्तं स्यादिति ।

न केवलमिदं अस्त्यन्यदपि कारणं यतो भारतीयानामौदासीन्यमेतादृशे विषये । तेषां सर्वदा एकलक्ष्यभूतो धर्मः । लोकयात्रामपि ते केवलन्धर्मतयाऽऽस्थितवन्तो बभूवुः। अतस्तत्र परमोपयोगिनीं विद्यामनपायममी प्रतितिष्ठापयिषवः शिलायामपि लिखितं कालः क्रमेण निश्शेषं कबळयितुमलम्भाविष्णुरिति तत्वमिदं संविदानास्सर्वां विद्यां स्मृतावारोप्य परिपालयांबभूवुः । तेनैव समाक्रान्तसर्वावकाशा तेषां शेमुषी नामूदृशाय पामरसाधारणकियत्कुतूहलपूरणमात्रफलाय दभ्राय समाचाराय पदमदिशत् ।

किञ्च यत्र ते ते समाचारास्सम्भवन्ति तत्तद्वर्षमासदिनगणनं यथा राज्यसम्बन्धिषु लेखेषु व्यवहारेषु चावश्यकं न तथा उपदेशेदंपरेषु शास्त्रसम्प्रदायानुरोधिषु । तत्र यदि भूतपूर्वाणां भारतभूभुजामावासादिषु किञ्चिदद्यावधि अवशिष्टमभविष्यत् असंदिग्धन्तर्हि एकैकदेशन्दृष्ट्वा प्रबन्धानां प्रबन्धॄणां च कालदेशादिकमन्यथाऽन्यथाऽनुमिमानानभियोद्धुं नासीश्चरा भवेम । किं कुर्मः दीर्घता कालस्य बलवती । पुरा यत्रागारं विपिनमधुना तत्र भवति । एवं सति समाचारे, नायमनपायसम्पद्भूतानि शास्त्ररत्नानि फलितवतां विपश्चितामपराधो यदेते काळदेशप्रभृतिकं विशिष्येदन्त्वेन न प्रतिपादयाम्बभूवुरिति ।

एवमेतस्मिन् विषयेऽत्यन्तमुदासीनेष्वपि भारतीयेषु प्रबन्धृषु, अद्यत्वे सार्वत्रिकीमभिरुचिमनुसृत्य विमर्शे यतमानेन सर्वेण भवति नियोगतस्तत्रापि व्यापरितव्यम् । तत्रादौ भगवान् जैमिनिरुपतिष्ठते यमालम्ब्य मीमांसाशास्त्रमिदं प्रथमं सूत्ररूपेणात्मानमाविश्चकार ।

चतुरन्तेऽस्मिन्देशेऽमीषां सूत्राणां महर्षिजैमिनिकर्तृकत्वे निश्चयप्रचे पाश्चात्यदृष्टिर्विपरीतं प्रसरति। डाक्टर् कोल्ब्रूक् तत्र युक्तिमप्याह....यदि तत्र जैमिनिः स्वयं कर्ता स कथमात्मानं स्वयं तृतीय (प्रथम) पुरुषवन्निर्दिष्टवान् स्यात् ? अन्यदपि । मीमांसासूत्रेषु बादरायणस्य ब्रह्मसूत्रेषु जैमिनेश्चास्ति कीर्तनम् । तत्र यदि मीमांसासूत्राणि प्रथमं जैमिनिना कृतानि तदा तानि दृष्ट्वा तदनन्तरं बादरायणः स्वयमितराणि सूत्राणि कुर्वन् तत्र जैमिनिं कीर्तयतीति युक्तं । जैमिनिसूत्रेषु पुनः कथं बादरायणाभिधानम् ? एवं ब्रह्मसूत्राणां पूर्वत्वे तत्र जैमिनिमतोल्लेखस्सर्वथा नोपपद्यते । तदिदमालोचयद्भिरेवन्तावदुपपत्तिरभिधातव्या । उभौ जैमिनिबादरायणौ स्वस्वशिष्यान् पृथक् स्वस्वमतमध्यापयाम्बभूवतुः । तत उभयेषां शिष्याणां मिथस्समागमेनान्यथा वा मतान्तरपरिज्ञानमपि समजायत । तादृशशिष्याणामन्यतमोऽन्यतमौ वा कर्मब्रह्मसूत्राणि कृतवन्तौ भवेतामिति ।

अत्र पश्यामः । भगवान् जैमिनिरमूनि सूत्राणि स्वयं सूत्रयामासेति न केवलं सामान्यजनेषु न केवलं पण्डितेषु, विश्वविख्यातेष्वपि तु सर्वज्ञेषु पुरुषेष्वैतिह्यमिदं सुचिरमनुवर्तते । तत्र किन्नाम बलवद्बाधकं येन तदेकपदेऽपजानीमहि । भ्रान्तिं वा तेषामुपकल्पयेम । ऐतिह्यं किमैतिह्यमित्येव मिथ्याभूतम् ? प्राच्यसमाचारान्प्रति पाश्चात्यानां बुद्धौ प्रसरन्त्यामनेकेष्वपगुणेष्वयमेकः यदिमे प्राच्यानां मिथ्यागौरवे महत्याशंति मन्यमानाः स्वाभिप्रायविरोधि सर्वं तेषां प्रमाणजातन्नाद्रियन्ते । न केवलन्नाद्रियन्ते अत्यन्तं लघयन्त्यपि । भारतीयग्रन्थपरिचयशालिनां स्पष्टमिदं प्रतीयेत यत् स्वग्रन्थे स्वनाम-

सङ्कीर्तनसम्प्रदायाश्चिरादस्तीति ।.अतो मीमांसासूत्रेषु जैमिनेरभिधानन्न तेषान्तत्कर्तृकत्वं बाधते । द्वितीयन्तु बाधकं किञ्चित्सावधानं पर्यालोचनीयम् । जैमिनिबादरायणौ सर्वथा न दृष्टपरस्परौ । धर्ममीमांसां विना जैमिनिना, ब्रह्ममीमांसां विना बादरायणेन वा न वैदिकं ग्रन्थान्तरं कृतमिति यदि द्वयमिदं प्रमाणसिद्धं तदैव हि परस्परसूत्रेषु परस्परनामदर्शनं तत्तत्कर्तृकत्वे बाधकं भवेत् । यदि खल्वितरेतरग्रन्थान्तरामितरेतराभ्याममिवीक्षितं स्यात् तदा तत एवेतरेतरमतमुपलभ्य तावुभौ स्वस्वग्रन्थे इतरेतरमतं निबद्धवन्तौ भवेतामिति नेदमीषदप्यनुपपन्नम् । यदि वा तयोस्समागमस्साक्षादवर्तत तदाऽपि संव्यवहारेण पारस्परिकमतपरिज्ञानं सुलभमेवेति नायमसम्भावितोऽर्थः । तत्र सुबहूनि सन्ति प्रमाणवचनानि यानि जैमिनिबादरायणयोश्शिष्याचार्यभावं बोधयन्ति, येषाञ्च विरोधि प्रमाणान्तरं नैव किञ्चिदुपलभ्यते । तस्मात् शिष्यभूतो जैमिनिरुपदेशसमये आचार्यस्य बादरायणस्य मतं जानन् सत्यां प्रसक्तौ सगौरवबहुमानमाचार्यनाम सङ्कीर्तयन् पूर्वमीमांसां निबबन्ध आचार्याय चोपजहार । तदवलोक्य तद्विचारचातुरीभरसमुदिताह्लादमेदुरहृदयो भगवान् बादरायणस्तत्र तत्र शिष्यस्यापि जैमिनेर्नाम निबध्नन् ब्रह्ममीमांसामनुजग्राहेति प्रमाणपरिकर्मितोऽयमर्थो, विश्वसिमि, नापातप्रतीतिकृतस्याभियोगस्य भाजनं भविता । शबरकुमारिलौ तत्र तत्र सूत्रकर्तृत्वेन जैमिनिं कीर्तयतः । तयोस्तदवगमः पूर्वपूर्वव्याख्यातृपरम्परया समागत इति जैमिनिकर्तृकत्वेऽमीषां सूत्राणां न प्राञ्चस्सन्दिग्धवन्तो दृश्यन्ते । न वाऽस्त्यवसरस्तेऽन्यथा गृहीतवन्त इति

कल्पयितुं । तृतीयाध्याये चतुर्थपादे कानिचित् सूत्राणि शबरस्वामिना भाष्यकारेण न व्याख्यातानि । तत् कस्मादित्याशङ्क्य 'बहुधा तदुपपत्तीः कुमारिलः प्रतिपादयतीति पुरा दर्श्यते'। तत्र 'अनार्षेयाणीत्यपरे' इति कुमारिल आह । इदं हि चिन्तयतां इदानीं समुपलभ्यमानेयं सूत्रानुपूर्वी साक्षादृषिप्रणीतेति-प्राचां सर्वेषां मतिरासीदिति प्रत्येतव्यं भवति ।

अथ कस्मिन् काले भगवान् जैमिनिर्भुवमलञ्चकार ? कोऽपि हूणमेधावी मन्यते मिताक्षराकृतो विज्ञानेश्वरादनन्तरं क्रिस्तोःपश्चात् त्रयोदशे शतके जैमिनिरासेति ! महान्मे सन्देहः अपि नामेयमुक्तिर्हसनमप्यास्माकीनमर्हतीति । प्रायस्सर्वे कालनिर्णेतारः 'किं कनिष्ठाः किमु ज्येष्ठाः' इति विमर्शस्य गोचरीभवन्ति । यथा वीबर् अभिप्रैति ब्रह्मसूत्रकारो व्यासस्तानि सूत्राणि क्रि. प. पञ्चमे लिखितवानिति । माक्समुल्लर् पुनः दर्शनप्रवर्तकानां कालनिर्णयो नामेदं सर्वथा दुष्करं कार्यमिति स्वयं वदन् तत्र निराशो जैमिन्यादीनां कालनिर्णयम्प्रति जोषम्भावमजुषत [2] । तत्र यथाशक्ति किञ्चित्प्रयत्यते ।

महाभाष्ये मीमांसका इति बहुत्र व्यवह्रियते [3] । तेन पतञ्जलिकाले मीमांसायाः प्रसिद्धिरासीदिति ज्ञायते । अतोऽनुमिमीमहे पतञ्जलेः प्राक्कालिको जैमिनिर्भवितुमर्हति यः सम्प्रति विद्यमानस्य मीमांसासम्प्रदायस्य प्रथमप्रवर्तको भवति । जैमिनिसूत्राणामुपवर्षो नाम वृत्तिकार आसीदिति साक्षाच्छबरस्वामिनो लेखनादवगम्यते । कदातनोऽयमुपवर्षः ? यदि कथासरित्सागरो विश्वासार्हस्तर्हि अधिपाणिनीयं वार्तिकं रचितवतः कात्यायनापरपर्यायस्य वररुचेः प्रधा-

नकालिक उपवर्ष इति निस्सन्दिग्धं प्रतीमः । एवं सत्यनुक्तिसिद्धमिदं यदुपवर्षवृत्तिरूपव्याख्यानव्याख्येयस्य मीमांसाशास्त्रस्य प्रणेता जैमिनिरुपवर्षात्प्राचीन इति उपवर्षसमानकालिकान्महावार्तिककाराद्वररुचिकात्यायनादपि प्राचीनो जैमिनिरिति । न केवलमियत्; पाणिनिरपि स्वयं क्रमादिगणे मीमांसामपि पठन् जैमिन्यनन्तरकालिकत्वमात्मनो ज्ञापयति । गणपाठस्य प्रक्षेपबहुळतासम्भावनयाऽपाणिनीयत्वसन्देहमुद्भावयन् वीबर् तत्प्रामाण्यं शिथिलयितुमिव यद्यप्युद्युङ्क्ते तथाऽपि महाभाष्ये परिचयवन्तो न कदाऽपि तथा मन्वीरन् न वा सन्दिहेरन् ।

अथ च तैत्तिरीयप्रातिशाख्ये मीमांसकास्सङ्कीर्त्यन्ते [5] । एतत्प्रातिशाख्यभाष्येषु त्रिष्वन्यतमस्य कर्ता वररुचिरिति वदन्ति [6] । सोऽयं वररुचिर्यदि महावार्तिककार एव साक्षात्तर्हि मुक्तसंशयमिदं यत्तैत्तिरीयप्रातिशाख्यविरचनकाल एव प्रसिद्धिमासादितवत्या मीमांसायाः प्रवर्तकेन महर्षिणा, वररुचिप्रभृतिभ्यः, यदि वररुचिसमानकालिकः पाणिनिस्तदा तत्प्रभृतिभ्यो वैयाकरणकूटस्थेभ्योऽत्यन्तं प्राचीनेन भवितव्यमिति ।

कात्यायनश्रौतसूत्रेषु कियान् परिश्रमो ग्राह्यत्यस्मान् मीमांसासूत्राण्यदृष्टवता नैव भवितुं शक्यमुक्तश्रौतसूत्रकारेणेति [7] । तत्र कोऽसौ कात्यायन इत्यत्र सर्वानुक्रमणीव्याख्यातुस्सद्गुरुशिष्यस्य वचनानि प्रमाणयन् माक्स्मुल्लर् महावार्तिककारवररुचिकात्यायन एवासौ श्रौतसूत्रकर्ता कात्यायन इति निश्चिनोति [8] । यद्येवं मीमांसाप्रबन्धुर्वैयाकरणमूलपुरुषेभ्यः प्राचीनत्वे उपष्टम्भकान्तरं प्रदर्शितं भवति ।

अपि चाश्वलायनः पाणिनेः प्राचीन इति नास्ति सन्देहगन्धः। नडादिगणेह्याश्वलायनपदव्युत्पत्तयेऽश्वलपदं परिपठ्यते । तत्रेदमपि प्रमाणान्तरम्, शौनकाश्वलायनयोश्शिष्याचार्यभावः प्रमाणप्रसिद्धः[8]। तत्र शौनकं साक्षात्सूत्रेणैव कीर्तयति पाणिनिः 'शौनकादिभ्यश्चे'ति। एवं शौनकस्य पाणिन्यपेक्षयाऽत्यन्तं प्राक्कालिकत्वे सिद्धे तच्छिष्यस्यापि तथात्वमनितरापेक्षं सिध्यति । अनेनाश्वलायनेन कृतानां श्रौतसूत्राणां परिशीलने तस्यापि मीमांसासूत्राणि विदितानीति स्पष्टमवगम्यते [9] । अथ वा कृतं प्रत्यक्षेऽनुमानेन[10] । स्वयं प्रवरप्रस्तावे जैमिनिं कीर्तयत्याश्वलायनः । तदिदमालोचयन्तो निश्चिनुमः पाणिनिप्राक्कालिकाभ्यां शौनकाश्वलायनाभ्यामपि प्राक्तनानि मीमांसासूत्राणि तत्कर्ताऽपि तथेति । शौनककर्तृकतया प्रसिद्धायां बृहद्देवतायामपि सन्ति श्लोकाः ये जैमिनिसूत्राणां प्रत्यभिज्ञापका भवन्ति ।

अपि च मीमांसासूत्राणां भगवद्बोधायनकृता काऽपि वृत्तिरासीदिति वदन्ति [11] । अयं बोधायनो यदि याजुषश्रौतसूत्रकृतो बोधायनादनन्यः मीमांसासूत्रकृतस्तर्हि पाणिनेः प्राचीनतरत्वं न विवादपदं भवति यतो बोधायनस्य पाणिनिप्राक्कालिकत्वं विमर्शका निर्धारितवन्तः [12] । मीमांसासूत्रेषु दृश्यमानानि कतिपयानि अपाणिनीयानि रूपाण्यपि तत्कर्तुः पाणिनिप्राक्कालिकत्वावधारणे हस्तावलंबं ददति [13] ।

एवं स्थिते, यदि पतञ्जलिकात्यायनपाणिनीनां शौनकाश्वलायनयोर्बोधायनस्य वा कालः, तेषु परस्परमन्तराळकालोवा विशिष्ये-

दन्त्वेन निर्धारितो भवेत् निर्धारितो भवेत्तर्हि मीमांसासूत्रकारस्योत्तरावधिभूतः कालः । तत्र पतञ्जलिकालन्निर्धारयितुं प्रयतितवत्सु एकस्य पन्थानन्नापरोऽन्वसरत् । तेन क्रिस्तोः पश्चात् प्रथममारभ्य ततः पूर्वन्दशमपर्यन्तं गच्छन्नागच्छन् पतञ्जलिरद्यावधि निर्धारितं स्थानं किमपि नालब्ध । एवमेव शास्त्रकाराणामन्येषामपि तत्तत्प्रबन्धप्रतिपाद्यप्रकारपरिशीलनेन कियदवधि पौर्वापर्यमात्रं सम्यङ् निश्चिन्वानाः विशिष्य तत्तत्कालस्येदन्त्वे महतीं वैयाकुलीमापादयन्ति । तत्रैकैकोऽपि विमर्शकः स्वस्ववासनानुरोधेनैकैकत्र पक्षपाती प्रचुराभिनिवेशो भवतीति तदिदं कारणम् । आस्त्विदं । नात्र प्रत्यंशं प्रविश्य वक्तुमस्त्यवसरः । इदं परन्तथाऽपि वदितुमभिलषामि । प्राक् क्रिस्तोः षष्ठमारभ्य द्वितीयावधिस्सूत्रकाल इति व्यवस्थापयन्तः, येषान्नामानि ज्ञातानि ज्ञास्यन्ते वा तान्सर्वानेवासङ्ख्येयानृषीन् तस्य कालस्यान्तरेव सङ्कुष्टपरस्परस्कन्धं यन्निवेशयन्ति तत्सर्वथा प्रमाणपथमतिवर्तत इति ।

सत्यप्येवं, मम भाति, व्यासस्य बादरायणस्य सम्बन्धाज्जैमिनेरपि कालो निर्धारयितुमुचितः शक्यश्च । यतो व्यासबादरायणयोरभेदं साधयन्तः प्रामाणिकाः व्यासजैमिन्योरध्यापकाध्याप्यभावं प्रामाणिकमूरी[14]कुर्वन्ति । तत्र प्रागुक्तरीत्या शङ्कराचार्यात्पूर्वं द्वित्रेषु शतकेषु वेदव्यास इति वीबर् प्रत्येति । अत्र मूलं शङ्करविजयः । एतदनुरोधेन क्रि. प. पञ्चमे व्यासः, अष्टमे शङ्कर इति स मन्यते - शङ्करविजयश्चेत्प्रमाणं तर्हि प्रमाणान्तरानुसारेण द्वापरकलियुगसन्धौ बादरायणः तदनन्तरं तत्सन्निहितकाल शङ्कराचार्य इत्यपि सुवचम् ।

नत्वेवं वक्तुं पाश्चात्यानां शेमुषी प्रवर्तते । तथा दृढस्तेषां बुद्धेस्संस्कारविशेषः यथा प्राचीनतममपि वस्तु नवीनमभिधातुमुद्यमो भवति स्वभावेन । यदि न काळिदासात्पूर्वं, तथाऽपि तस्मादनन्तरं सम्यक्तावद्विदितमिदमत्रत्यानां यद्वस्तुनो रामणीयकं गौरवं वा न तस्य प्राचीनत्ववशंवदमिति । तेन प्राचां लेखनमैतिह्यं वा यावद्गौरवमर्हति तावत्तत्र कलयितुं यन्नेच्छन्ति प्रतीच्या विद्वांसस्तदहेतुकात्सन्देहादविस्रम्भाद्वेति समीची विपरीता वा मे मतिः ।

आचार्यप्रशंसायै प्रवृत्तेषु बहुषु शङ्करविजयेषु परस्परविरुद्धा अर्था बहुलमुपलभ्यन्ते । तेन तदनुसारं यत्किञ्चिद्व्यवस्थापनन्नातीवादरार्हमिति स्यादिदम् । यद् ब्रुवते पातञ्जलयोगसूत्राणां वेदव्यासकर्तृकं भाष्यमुपलभमानाः वेदव्यासस्य पतञ्जलिमपेक्ष्यार्वाचीनतां निश्चिनुम इति तत्रेदं किञ्चिद्विमृशेम । प्रसिद्धवेदव्यासकर्तृकतया परिदृश्यमानानामन्येषां ग्रन्थानां योगसूत्रभाष्यस्य च शैल्याः परीक्षणे तेषामेककर्तृकत्वम् नैवाध्यवसातुं शक्यते । तथा योगसूत्रभाष्ये बहुत्र 'तदुक्त'मिति असकृद्भगवद्गीतादिपद्यमुदाह्रियते । कथं केनचित् स्वीयमेव वचनं स्वयमेव प्रमाणतयोपन्यस्येत ? प्रत्युत 'तदुक्त' मित्यनेनान्यस्याप्तलमस्य महापुरुषस्य वचनमिदमिति ध्वन्यते । तद्भाष्यव्याख्यात्रा वाचस्पतिना ग्रन्थारम्भे 'वेदव्यासेन भाषिते' इति कथनात् साक्षाद्बादरायणस्य तत्कर्तृत्वं वाचस्पतिरभिसन्दध इति नास्ति वक्तुमवसरः । मूले हि यत्र 'तदुक्त'मिति प्रमाणमुपन्यस्यते तत्र वाचस्पतिः 'वैयासिकीं गाथामुदाहरति' त्यवतारयंस्तस्य भिन्नकर्तृकत्वमाशेत इति प्रतीयते । कथं हि व्यासः कलि-

द्वापरसन्धावासीदिति भगवत्पादवचनं संविदानो भामतीका वाचस्पतिः स्वयमन्यत्र पतञ्जलिमपेक्ष्यावार्चीनतां व्यासस्य प्रति पादितवान् भवेत् ?

मास्तु वेदं सर्वं ; अस्ति वचनं साक्षात्पतञ्जलेः, अस्त्वयमा साक्षात्कात्यायनस्य वररुचेः यत्र व्यासस्य सुस्पष्टमभिधानं प्रतीयते यच्च, विश्वसिमि, न बहूनामद्यावधि दृष्टिगोचरमासादयतिस्म तदिदं ' सुधातुरकङ्च ' इति सूत्रसमीपे कात्यायनवचनं ' व्यास वरुडनिषादचण्डालबिम्बानाञ्चेति वक्तव्य'मिति । प्रकृतिसंशयाल्ल वोऽत्रापि संशयीरन् यः कोऽप्यसौ व्यास इति । जानन्निवेदं पतञ्ज लिः वार्तिकोपात्तानन्यान् विहाय व्यासमात्रमुदाहरति सह पुत्रे ' वैयासकिः शुक ' इति । मन्ये जानन्त इदं न पुनः पण्डिताः कर्णारुन्तुदं वदिष्यन्ति विमर्शकाः पूर्वेद्युः प्रपूर्वेद्युर्वा ब्रह्मसूत्रक इति । विनेदं, यदि गणपाठः प्रामाण्यमर्हति....वस्तुतो नास्ति त मात्रयाऽप्यन्यथाभावसंशयः---तर्हीदं वक्तु युक्त यन्नडादिगणे बद द्वीपशब्दौ घटयित्वा बादरायणद्वैपायनशब्दौ निष्पादयन् पाणिनिर बादरायणं कृष्णद्वैपायनं व्यासं जानातीति । अपिच ' कलापि वै शम्पायनान्तेवासिभ्यश्च ' इति सूत्रं तत्रत्यं भाष्यञ्च पश्यन मन्महे यादृशा क्रमेण वैदिकशिष्याचार्यपरम्परा पुराणेषु प्रतिपादित सोऽयं क्रमः पाणिनिपतञ्जल्योस्सम्यग्विज्ञात इति । तत्र पैलवै शम्पायनयोर्व्यासान्तेवासित्वं प्रसिद्धं। उभाविमौ शाखाविशेषप्रवर्तक कठाद्याचार्यत्वादिना पाणिनिना कीर्त्यमानौ पाणिनेरत्यन्तं प्राचीन वित्यत्र कः सन्दिहेत ? तथाच तदाचार्यस्य व्यासबादरायणस

एतदन्तेवासिनस्तत्सतीर्थ्यस्य जैमिनेरपि पाणिन्यपेक्षया, न इयता तावता कालेन, किन्तु सहस्रैर्वर्षैः प्राक्तनत्वं वक्तुमस्मि नियन्त्रितः। तत्र तत्कालस्य विशिष्येदन्तानिर्धारणे विना पुराणं नान्यदस्ति किञ्चिदुपकारकम् । तदनुरोधेन तु कलिद्वापरयोस्सन्धौ व्यास इति निशामयन्तस्तच्छिष्यस्यापि तेनैवकालेन भवितव्यमिति इतः पञ्च-सहस्रेभ्यो वर्षेभ्यः प्राक् जैमिनिरिति सम्भावयामः। अत्र विषये विना निष्कारणं सन्देहं नान्यद्बलवद्बाधकं किमपि विमर्शकैरुद्भावित-मद्यावधि बुद्धिगोचरमासादितम् ।

शैल्या मीमांसासूत्राणां विशदसरळानामत्यन्तमर्वाक्कालिकत्वं सम्भावयन्तो नवीना नैव तेषान्तावत्प्राचीनत्वमनुमन्येरन् । तत्र कारणं यत्ते क्रि. प्राक् त्रिचतुराणि शतकानि सूत्रकाल इति दृढप्ररूढ-वासनाः। यद्वदन्ति केचित् पञ्चषेभ्यो वर्षसहस्रेभ्योऽर्वाचीनेन नैव भवितुं शक्यं वेदकालेनेति तत्तथेति कृत्वा यदि तदाप्रभृति प्रवृत्तं सूत्रकालमङ्गीकुर्मः न तर्हि मीमांसासूत्राणान्तथा प्राचीनत्वं सर्वात्मनाऽसम्भावितमिति विवेचकेभ्यो भायात् । बौद्धलेखनेषु दृश्यते बुद्धष्षड्दर्शनान्यध्यगीष्टेति । तेन बुद्धात्प्राचीनानि मीमांसासूत्राणीति मन्तुमस्त्यवसरः । अन्यदिदं मीमांसासूत्राणां प्राचीनत्वे बाधकं केचिन्मन्यन्ते । ‘पुराणप्रोक्तेषु ब्राह्मणकल्पेषु’ इति सूत्र-व्याख्यानावसरे पुराणपदव्यावृत्तिप्रदर्शनाय ‘आश्मरथ्येन प्रोक्त आश्मरथः कल्प’ इति प्रत्युदाहरणादाश्मरथ्यस्य पुराणभिन्नत्वं पाणिनिसमकालिकत्वमवगम्यते । सोऽयमाश्मरथ्यो मीमांसासूत्रेषु कीर्त्यत इति पाणिनेस्सर्वथाऽनन्तरकालिकानीमानीति । वस्तुतस्तु

नेदं बाधकम् । 'आश्मरथः कल्प' इत्युदाहरणस्य प्रामाणिकत्वेऽपि आश्मरथ्यस्य पाणिनिसमकालिकत्वे नैव काचिदस्ति युक्तिः । न केवलप्राचीनमात्रवाची पुराणशब्दः, अपितु प्राचीनतमवाची । तेन शाट्यायनादीन् पाणिनेः प्राचीनतमानपेक्ष्याश्मरथ्यस्यार्वाचीनत्वेऽपि पाणिन्यपेक्षया प्राचीनत्वे न किञ्चित् प्रतीपं गच्छति [15] । कण्वादिगणपाठेनापीदन्दत्तहस्तं भवति । अपिचापाणिनीयप्रयोगदर्शनादापस्तम्बं पाणिनेः प्राक् स्थापयन्ति । सोऽयमापस्तम्ब आश्मरथ्यं स्वीयश्रौतसूत्रे कीर्तयति । तथाऽऽश्वलायनोऽपि । तेन मीमांसा सूत्राणां तत्सूत्रयितुर्वा सम्भाव्यमानः कालो न प्रमाणानिगृहीत इति कियानप्येष संवादापेक्षः पर्यालोचनप्रसरः ।

अथ जैमिनेरावासं प्रति, यत्र तदाचार्यो तत्रायमप्यवात्सीदित्येतद्विना न किञ्चिन्निश्चायकमुपलभ्यते । 'माथुरव'दिति (मी. 1—3—21.) सूत्रेण मथुरा जैमिनेर्विदितेति गम्यते । सर्वात्मना प्रामाणिकाः कदाचिद्वयमत्र भवेम यदि तेनानुमिमीमहि मथुरां समया क्वचिदयमुषितवान् भवेदिति, यतो दवीयसाऽपि तेन ज्ञाता स्यात् जगति प्रसिद्धतमास्वन्यतमा सा नगरी । तदिदं प्रकृतेऽत्रैव विहाय सूत्राणि किञ्चित्पश्येम ।

सूत्रेषु मीमांसासूत्राणि सरळतमानीति, स्मरामि, तत्र भवान् कवितार्किककेसरी क्वचित्प्रतिपादयति [16] । नाकुलानि नाविशदानि प्रायेण नाध्याहारापेक्षीण्यमूनि सूत्राणि । सूत्रत्वसंरक्षणाय प्रवर्तमानया संग्रहेच्छया नक्वचिदावश्यकपदप्रयोग उपरुद्धः । न क्वचि-

त्पारिभाषिकं पदं परिदृश्यते । अनेकपदार्थेषु प्रतिपादयितव्येषु सर्वत्र समाहारद्वन्द्व एक आदृतः । क्वचिदितरेतरयोगद्वन्द्वः । विहाय कतिपयानि प्रायस्सर्वाणि पद्यगन्धीनि अथ वा पद्यमयानि सूत्राणि । तत्र छन्दः परमानुष्टुभमेकम् । तत्रैतत्सूत्रकारो विनाऽऽत्मानमन्यान्नव आचार्यान् कीर्तयति । त इमे—बादरायणः बादरिः ऐतिशायनः कार्ष्णाजिनिः आत्रेयः आश्मरथ्यः आलेखनः लावुकायनः कामुकायन इति ।

विहाय मीमांसासूत्राण्यमूनि, सन्ति ज्योतिस्सूत्राणि [17] यानि जैमिनिकर्तृकतया व्यवह्रियन्ते । किमसौ स एव जैमिनिर्यो मीमांसाप्रवर्तकः ? किमस्ति बाधकं किमपि तत्कर्तृकत्वेऽमीषाम् ? न वयमिदानीमिदं विशिष्य निर्धारयितुं पर्याप्तसामग्रीकाः । रुद्रदत्तलेखनात्प्रतीमः कल्पसूत्राण्यपि सन्ति तलवकारकल्पाभिधानानि जैमिनिना सूत्रितानीति । तथा भारतान्तरमपि रामायणान्तरमपि जैमिनिना कृतमित्यस्ति प्रसिद्धिः । तदेवं महर्षिं जैमिनिमवलम्ब्येयं मीमांसा जगति इदम्प्रथममात्मानं प्रकाशितवतीति जानन्तस्ततो निवर्त्य तदनन्तरं तस्याः प्रक्रमम्प्रति धियं व्यापारयेम ।

अमीषां जैमिनीयानां मीमांसासूत्राणां कृतकोटिनामधेयं विस्तीर्णं व्याख्यानं प्रथमं भगवान् बोधायनश्चकारेति वदन्ति [18] । व्याख्यानन्तु तन्नेदानीमुपलभ्यते । तत्ववुभुत्सवो लघुतमोपायैकदत्तदृष्टयः वृथा कालं क्षेप्तुमनिच्छन्तो भारताभिजनाः लब्धे लघुभूते कस्मिंश्चित्समीचीन उपाये गुरुभूतमतिमात्रमुपेक्षाञ्चक्रिरे यावत्तत्सर्वमात्यन्तिकमभावमगच्छत् । न चेदीदृशस्समाचारो गणनासीमानमतिलंघ्य वर्तेरन् भारतवर्षे ग्रन्थजातानि । स एष बोधायनो यदि

कल्पसूत्रकाराद्बोधायनादनन्यः ( यावद्बाधकमुपलभ्यते तावदेवमेव कुर्मः ) तर्हि असौ पाश्चात्यानां दृष्ट्या क्रि. प्रा. पञ्चमे बभूव । असति बाधके पुराणानामत्रत्यानामैतिह्यानाञ्चोचितं प्रामाण्यमनपलप्य यदि सूत्रकालं कल्पयेम तर्हि सोऽयं कालः कतिपयैर्वर्षसहस्रैर्द्राघीयानिति स्यात् । यद्यपि ततोऽपि प्राचीनतरेण भवितुं शक्यं बोधायनेनेति प्रतिभाति ।

अथायमपरस्तेषां सूत्राणां वृत्तिकार उपवर्षो नाम । बोधायनकृतस्य व्याख्यानस्यातिविस्तीर्णतामालोच्य सङ्गृह्य व्याख्यातुमसौ प्रवृत्त इति कथयन्ति [19] । एषाऽपि वृत्तिः पूर्वव्याख्यानस्यैव गतिमलभत । अस्योपवर्षस्य, विना पाणिनिकात्यायनसम्बन्धं कथासरित्सागरप्रतिपादितं, नान्यदस्ति कालनिर्णये प्रमाणमिति तत्समानकालिकत्वमेवास्य बाधकप्रहाणात्प्रकृतेऽभ्युपगच्छामः ।

एतदनन्तरकालिकौ मीमांसासूत्रव्याख्यातारौ देवस्वामिभवदासनामानावभूतामिति प्रपञ्चहृदयतोऽवगम्यते । कदातनाविमौ ? कियदन्तरन्तयोः ? किमभिधानङ्कीदृशन्तयोर्व्याख्यानम् ? प्रकृते दुस्समाधाना इमे प्रश्नाः । तत्र भवदासः कुमारिलेन कीर्तितनामा [20] । स्वयमपि शबरस्वामी ‘ अपर आह ’ ‘अन्यैरुक्त’ इति तत्र तत्र व्याख्यानभेदान् प्रदर्शयन् स्वस्मात्पूर्वमनेकेषां व्याख्यातॄणां सद्भावं ज्ञापयति । तत्र कदाचिदसौ देवस्वामी भवदासो वा तेनाभिसंहितो भवेत् ।

अमीषामनुपलभ्यमानप्रबन्धप्रबन्धॄणामनन्तरं तत्र भवतः शबरस्वामिनः स्थानम् , योऽसावद्यत्वे जगति विद्यमानस्य सकलस्य

मीमांसासूत्रव्याख्यानप्रबन्धराशेः शिरसि स्थितं भाष्यं प्राणैषीत् । ललिता च मधुरा च प्रसन्ना च संस्कृता च सुश्लिष्टपदा च गम्भीरा च शाबरी वचनभङ्गी । विवक्षितार्थप्रतिपादनपटुतायां यदि नाद्वितीयत्वं शबरस्य तर्हि तत्पातञ्जलेन महाभाष्येण । भाषायां स्वातन्त्र्यस्य व्युत्पत्तिविशदिम्नो वा इदं लक्षणं यदभिधीयमानं प्रायस्सर्वं न्यायरूपं भवति । तादृशन्यायशतजटिलमिदं भाष्यम् । व्यवहाराननुगुणमिव रूपमादायाद्यत्वे वर्तमानां संस्कृतभाषां पुनस्तदनुगुणं परिष्कर्तुं यदि कश्चिद्यतेत, तस्य भाष्यसन्दर्भोऽयमवश्यमालोचनीयः यतस्तत्र चिरप्रयुक्तप्रलीनाः शृङ्गग्राहिकया विवक्षितार्थप्रतिपादनसमर्थाः प्रयोगविशेषा बहुलमुपलभ्यन्ते । तदिदं भाष्यं मीमांसासूत्राणां द्वादशाध्यायावधि वर्तते । तत्र तृतीयेऽध्याये तुरीये पादे दशमादीनां षण्णां सूत्राणां भाष्यं नोपलभ्यते । तत्र कुमारिलो बह्वीरुत्प्रेक्षा वर्णयाञ्चकार। तदिदं तद्वचः .... 'अतःपरं षट्सूत्राणि भाष्यकारेण न लिखितानि । तत्र व्याख्यातारो विवदन्ते । केचिदाहुः विस्मृतानि । लिखितो ग्रन्थः प्रलीन इत्यपरे । फल्गुत्वादुपेक्षितानीत्यन्ये । अनार्षेयत्वादित्यपरे........वृत्त्यन्तरकारैस्तु सर्वैर्व्याख्यातानि' ।

कुतः कियान्परिचयो ग्राहयति नः प्राचां भाष्यकृतामयं कोऽपि सम्प्रदायः यदसकृत्त्तं प्रतिपिपादयिषितमर्थं पद्येन प्रतिपादयन्तीति । नैनं सम्प्रदायमजहात् शबरस्वामी । प्रायेणानुष्टुभं छन्दोऽनेन प्रयुक्तम् [21] । न्यायभाष्ये आर्या न दृश्यते । पातञ्जलशाबरभाष्ययोस्सा ऽस्तीति विशेषः ।

अथ कदाऽयं शबर आस ? यावदहं जानामि तावत् न कश्चिदेतदवधि निर्धारितवानिदम् । शङ्करभाष्ये स्पष्टङ्कीर्तनाच्चतः प्राचीनोऽयमिति सर्वविदितमिदम् [22] । कियद्भिर्वर्षैः प्राचीनः ? कः पुनरेतत्कालस्य पूर्वावधिः । तदद्य किञ्चिद्विविच्यते । यत्र शङ्कराचार्यो बभूव ततः प्राचीने शतके कुमारिल इति नव्या निश्चिन्वन्ति। तदिदमधिकृत्यानुपदं प्रतिपादयिष्यते । कुमारिलात् शबरस्य कियद्भिर्वर्षैर्व्यवधानं भवेत्। प्रागुदाहृतात्कुमारिलवचनाद्विदितमिदन्नः यत्कुमारिलसमये अवरपक्षे चतुर्णामन्यूनानि शाबरभाष्यस्य व्याख्यानान्यवर्तन्तेति । विना इमान् व्याख्यातॄन् कुमारिलः स्वाचार्यान् तत्र तत्र स्वकीये निबन्धे कीर्तयति । एतत्पर्यालोचयन्तो मन्यामहे शबरकुमारिलावन्तरा पञ्चषाणां सन्ततीनां कालोऽवर्ततेति। सोऽयं कालः, कुर्मस्तावत्, अवरतः सार्धे द्वेशते वर्षाणि स्यात् । एवं सतीदं सिद्ध्यति, परन्तूत्प्रेक्षामात्रमिदमिति स्मर्तव्यम्, यत्र कुमारिलो बभूव तस्मात्पूर्वं पूर्वतरञ्च विहाय पूर्वतमे शतके शबर इति । एवं शबरकुमारिलशतकयोर्मध्ये यदि शतकद्वयं, शङ्करशबरशतकयोस्तर्हि मध्ये ईषन्न्यूनाधिकं शतकत्रयमिति वक्तव्यम् ।

इदानीं यदि शङ्कराचार्यकालो विशिष्य ज्ञातः स्यात् ज्ञातस्तर्हि प्रायशः शाबरः कालः । नव्या विमर्शकाः शङ्कराचार्यान् कि. प. अष्टमे स्थापयन्ति । तत्र यद्यपीदं विस्तरेण विचारयितुं सङ्कुचितोऽवकाशो नानुमन्यते तथाऽपीदं परन्तात्त्विकं भाति यत्सर्वथा शतमितैर्वर्षैस्ततोऽपि प्राचीनतरेण शङ्कराचार्येण भवितव्यमिति । सन्ति च केचित् य इमं कि. प. षष्टे स्थितं मन्यन्ते [23] । एवं सति

क्रि. प. चतुर्थे ततःपूर्वं वा न तु ततोऽर्वाचीनः शबर इति सिद्ध्यति ।

इदमप्यत्र पर्यालोचयितुं युक्तं । अवैदिकमतावलम्बिनां वादिनामुच्छ्रायदशा क्रि. प. प्रथममारभ्येति प्रायेण सर्वैरङ्गीकृतमिदम् । तत्र कुमारिलः स्वग्रन्थोपक्रमे लोकायतीकृताया मीमांसायाः प्रतिविधानायायमारम्भ इति यतो वदति ततो ज्ञायते तस्मात्पूर्वं वादिव्रातनिरसनालङ्कर्मीणा मीमांसाप्रवीणाः त्रिचतुरेषु शतकेषु नासन्निति । अत इदमुचितं भाति कल्पयितुम्—शबरस्वामी तादृशवैदिकवावदूककालात्प्राचीन इति । शाबरभाष्यप्रतिपाद्यार्थसमालोचनेनापीदमित्थं विज्ञायते । तत्रह्यात्मानात्मविवेचने न तावान् विस्तारः परमतखण्डने यावता भवितव्यं यदि क्रि. प. कतिपयशतकानन्तरकालिकः शबरस्वामी अभविष्यत् । औत्पत्तिकसूत्र-( 1—1—5 ) व्याख्यानावसरे शबर आह 'एवं यदि प्रत्युक्तस्स माहायानिकः पक्षः' इति । महायानसूत्राणीति महावैपुल्यसूत्राणीति च बौद्धमतावलम्बीनि निबन्धनान्यासन् । अस्यैकदेश एव ललितविस्तरः। एतन्निबन्धनकालः बुद्धनिर्वाणसमनन्तर इति कल्पयन्तीति वीबर् आह ( 299 P. History of Indian Literature ) तेन तदनुरोधेन शबरस्य निश्चितः कालो नानुपन्नः ।

गङ्गानाथ जा पुनः स्वेन भाषान्तरीकृतस्य श्लोकवार्तिकस्योपोद्घाते क्रि. प्रा. प्रथमशतके स्थितं शबरस्वामिनं कथयन्तीति लिखति ।

एवमपश्याम क्रि. प. चतुर्थादनर्वाचीनो मीमांसाभाष्यकारः

शबरस्वामीति । अथ कःखलु भवेदेतत्कालस्य पूर्वावधिः ! [24] पाणिनिकात्यायनौ पिङ्गळञ्च कण्ठरवेण कीर्तयन् शबरो यद्यपि न क्वचित्पतञ्जलेर्नाम जग्राह तथाऽपि महाभाष्यस्थपतञ्जलिवचनानुवादस्य [25] शाबरे दर्शनात्पतञ्जलेस्सर्वथाऽर्वाचीनः शबर इति नात्र प्रमाणान्तरान्वेषणमावश्यकम् । परन्तु शबरेण पतञ्जलेरकीर्तनं ज्ञापयति नः नायन्तस्मादत्यन्तं प्राचीन इति । कदाचिदेकद्बशतकान्तरिताविमौ भवेतामिति । एवं, विना [26]न्यायवैशेषिकसूत्राणि, वात्स्यायनीयं न्यायभाष्यमपि हृदि निधाय शबरः तत्र तत्र लिखतीति तद्भाष्यं पठन्तः प्रतीमः । स एष वात्स्यायनः क्रि. प्रा. द्वितीये भूतात् चाणक्यादनन्य इति साधयितुं केचित्प्रयतन्ते [27] । एवं यदि, तस्मात्कालादनन्तरं शबर इति भवत्यङ्गीकर्तव्यम् । पतञ्जलेरपि कालो नाद्यावधि विवादमतीत्य वर्तते । जगन्नवीनतावादिनः क्रि. प्रा. द्वितीयमारभ्य प. प्रथमावधौ काले कुत्र चित्तं निवेशयन्ति । परेत्विदमसहमानाः क्रि. प्रा. दशमं तत्कालमवधारयन्ति । सप्तमं केचित् । तत्रेदानीं प्रविश्य विचारोऽनवसर इति सर्वथा न्यायव्याकरणभाष्यकृद्भ्यां मीमांसाभाष्यकृदनन्तरकालिक इत्येतावन्मात्रमभिधाय शबरस्वामिनमत्रैव हित्वोपरि गम्यते ।

अस्मादनन्तरं कुमारिलात्पूर्वमधिमीमांसाशास्त्रं स्वतन्त्रप्रबन्धार आसन्निति नात्रास्मद्बुद्धिगोचरमासादितं प्रमाणम् । परन्तूदाहृतपूर्वात् भट्टकुमारिलवचनात् कतिपये भाष्यव्याख्यातारो बभूवुरिति ज्ञायते । एषामेवान्यतमः कोऽपि स्यात् भर्तृमित्रो नाम यं श्लोकवार्तिकव्याख्याने न्यायरत्नाकरे पार्थसारथिमिश्रः कुमारिलखण्डनीय-

ाया कीर्तयति [28] । एषान्तु निबन्धलेशमपि सर्वघस्मरः कालोऽस्म-
ध्वधि नावशेषितवान् । तदद्य भट्टकुमारिलं पश्यामः । अस्य कुमा-
रेल इत्येतावन्मात्रं नामधेयम् । कुमार इत्यप्येनं पार्थसारथिराह्वयति [29]।
ुतात इत्यपि कुमारिलोऽभिहित इति तत्तद्ग्रन्थकाराणां 'तौतातिकाः'
ति लेखनतोऽवगम्यते । तत्रैतिह्यमपि वर्णयन्ति । आचार्यसन्नि-
ावधीयानः कुमारिलः कदाचित् 'तत्रापिनोक्तम्', 'अत्रतुनोक्तं'
ति पङ्क्तिं पपाठ । तदाकर्ण्य तत्रापि नोक्तम् , अत्र तु नोक्तं इति
ाभज्य तुकारासामञ्जस्यं चिन्तयत्याचार्ये कुमारिलः, 'तत्र अपिना
क्तम्' 'अत्र तुना उक्तम्' इति चतुरं पदच्छेदं चकार । तदा
भृति स तुतात इत्यभिदध इति । अतिशयिते पाण्डित्ये आदा-
न्ते वा भट्टपदं घटयित्वा नाम पण्डितानां कीर्त्यते । तदनुसृत्य
मारिलभट्ट इति भट्टकुमारिल इति चायमभिधीयते । भट्ट इति
ामान्यशब्दोऽप्ययं कालक्रमेण विशेषतः कुमारिले प्रसिद्धो बभूव ।
न केवलं 'भट्ट' इति कुमारिलाह्वाने प्रसिद्धे कुमारिलेऽभ्यधिकं
रवमाकलयन्तो जनाः पूज्यताद्योतकं पादशब्दं तेन सह संयोज्य
ाचार्यपादा इत्यादिवत् भट्टपादा इति तमाह्वातुमारेभिरे । एवं सति
षये कुमारिलस्य श्लोका भट्टपादा इत्युच्यन्त इति यदि केचिदभि-
ीरन् [30] तान्प्रति किन्नाम कथ्यतामिति पर्यालोचनमात्रे स्थीयते ।

मीमांसागृहस्य प्रधानस्तम्भोऽयं कुमारिलः । न चेदेष भट्ट-
ारिलो वैदिकमतस्य व्यपाश्रयोऽभविष्यत् तर्हि तदिदं मतं तदा-
ानां मतान्तरग्राहिलमनसामुद्दण्डानां प्रावादुकानां पुरस्तात् कुश-
ारां यां कामपि गतिं प्राप्तं स्यात् । अवलोकिततत्सन्दर्भाः नेदं

स्तुतित्वेन ग्रहीष्यन्ति यदि वदामि धीरा निपुणा विवेचनपट्वी विमर्शनैकस्वभावा विपुलप्रसरा काठिनमपि विभिद्य प्रविशन्ती तदीया धीस्सुसूक्ष्ममवगाहत इति । इममासाद्य प्रायेण रूपान्तर जग्राह मीमांसा । आसूत्रकारादाशबरं शास्त्रमिदमन्ते वसतां बोधनमात्रप्रवृत्तमिव मृदुप्रक्रममदृश्यत। वस्तुतस्समुत्पन्नान् दुर्निरसान् पूर्वपक्षिणोऽभियुञ्जानेनानेन पुनर्दुरूहयुक्तिशतपरिकर्मिता मीमांसा तदात्व एव शास्त्रगौरवमासादितवतीव ।

इदङ्कर्तृकः शाबरभाष्यस्य कृत्स्नस्य व्याख्यानभूतो ग्रन्थः भिन्नभिन्ननामशालिभिर्विभागैस्त्रिभिः प्रसिद्धिमुपगतः । तत्र प्रथमं श्लोकवार्तिकम् । इदं प्रथमाध्यायप्रथमपादभाष्यमात्रस्य व्याख्यानम्। अत्र श्लोकान् विना एकमपि वाक्यन्नास्तीति श्लोकवार्तिकमिति व्यवहारः । अथ तन्त्रवार्तिकमिति द्वितीयो भागः । प्रथमाध्यायद्वितीयपादप्रभृति तृतीयाध्यायचतुर्थपादसमाप्तिपर्यन्तस्य भाष्यस्य विस्तृतं व्याख्यानमिदम् । इदन्तु व्यतिषङ्गेण गद्यपद्यसंमिश्रम् । तृतीयन्तु टुप्टीकाभिधानं परिमितपद्यं तृतीयपञ्चमप्रभृति द्वादशान्तभागस्य गच्छद्गच्छद्व्याख्यानम् । तृतीयाध्यायसमाप्तिपर्यन्तं तन्त्रवार्तिकम् । चतुर्थाध्यायमारभ्य टुप्टीकेति तु तत्वम् । बृहट्टीकेति विस्तृतं व्याख्यानान्तरमपि शाबरभाष्यस्यानेन कृतमिति वदन्ति [31] । मानवकल्पसूत्राणां तैत्तिरीयशाखासम्बन्धिनां व्याख्यानमपि भट्टकुमारिलेन कृतमिति गोल्स्टकर् लिखति ।

भट्टकुमारिलेन समानं स्थानमर्हति शाबरभाष्यस्यापरो व्याख्याता यो गुरुरिति प्रभाकर इत्यभिधीयते [32] । अस्य मतं प्रायः

अस्य मतं प्राय: कात्स्न्येन कुमारिलमताननुरोधि । तेन एतावन्तं कालमेकरूपेणानुवृत्ता मीमांसा शाखाद्वयात्मना विभक्ता बभूव । तत्र परमदृष्टं कारणं यत्कौमारिले मते शाखोपशाखं जगति परित: प्रतायमाने मतमन्यत् कोणे कुहचिन्निगूढं निलिल्ये । अनेन विवरणं निबन्धनमिति पदे पदे वाचस्पतिपार्थसारथिप्रभृतिभिरुदाह्रियमाणं ग्रन्थद्वयं कृतम् । अनयोरन्यतरस्यैव ग्रन्थस्य शबरभाष्यव्याख्यानभूतस्य बृहतीति नामेति ज्ञायते । सोऽयमेको ग्रन्थ: सम्प्रति मद्राजकीयै: कुतश्चिदुपलब्धइति ससन्तोषं श्रूयते ।

अस्ति चिरन्तनमैतिह्यं....प्रभाकरकुमारिलयोस्तन्त्रार्थनिर्णारणे महान् विवादस्समजनि । तत्र परस्परं विजिगीषमाणौ तौ सुबहु प्रायतिषातामिति । एतदनुसृत्य समानकालिकाविमौ जातु भवेताम् । एवमनयोस्समकालत्वज्ञापकानि ऐतिह्यान्तराण्यपि सन्ति । परन्तु सर्वमिदमविश्वसनीयं भाति । कचित् कुमारिलेनोक्तमर्थं दूषयितुं प्रवृत्तत्वेन कञ्चित् ग्रन्थमुदाहृत्य अनेन ग्रन्थेन न कश्चित् परिहारोऽभिहित इति शास्त्रदीपिकायां पार्थसारथिमिश्रो[33] लिखति । तेन कुमारिलादर्वाचीनत्वं प्रभाकरस्य प्रतीयते ।

अथेदं स्थानं मण्डनमिश्रस्य । अयमत्यन्तं कर्मठो बभूव । अनन्तरमद्वैतभाष्यकारेण वादे विजित्य स्वमतं नीत्वा सुरेश्वर इति नामान्तरेणाहूयते स्मेति ऐतिह्यम् । अस्मद् द्वितीयमीमांसागुरव: श्री कुप्पुस्वामिशास्त्रिपादास्तु ( of the Presidency College Madras ) अन्यस्सुरेश्वराचार्य: अन्यो मण्डनमिश्र इत्यभिप्रयन्ति । अनेन मण्डनमिश्रेण भावनाविवेक: विधिविवेक: विभ्रमविवेक: इति

मीमांसायां त्रयः प्रबन्धाः अद्वैते ब्रह्मशिद्धिश्च कृताः । तत्र विध्यर्थमात्रविचारप्रवृत्ते विधिविवेके प्रसङ्गादिव प्राप्तकतिपयपदार्थतत्वं विमृश्य मीमांसाशास्त्रे पूर्वषट्कप्रतिपाद्यमर्थमीषत् स्पृष्ट्वा कुमारिलसम्मतशब्दभावनायाः प्रभाकरनिरूपितस्य नियोगस्य च विधित्वं निरस्य इष्टसाधनत्वमेव विधिरिति निरूप्यते ।

मण्डनमिश्रस्यानन्तरं प्रसिद्धो मीमांसकः शालिकनाथः । अस्य पाण्डित्यमगाधम् । वचनभङ्गी मनोहारिणी । मतान्तरप्रतिक्षेपचातुरी असाधरणी । सहृदयमसौ प्रभाकरमतमवलम्बते । ग्रन्थत्रयमनेन कृतमद्यत्वे विदितमस्माकम् । तत्रैकं ऋजुविमला नाम गुरुकृतायाः बृहत्याः व्याख्यानं यदद्यावधि श्रावणमात्रगोचरम् । अपरः प्रकरणपञ्चिका नाम प्रकरणग्रन्थः । अयमेको ग्रन्थ इदानीं गुरुमतप्रतिपादकः मुद्रितस्सुलभश्च । तत्र शास्त्रमुखं नीतिपथो नयवीथीति विभिन्नसंज्ञावन्ति बहूनि प्रकरणानि यानि प्राभाकराधिकारे विशिष्य कथयिष्यन्ते । तेषु कानिचित् शुद्धपद्यमयानि, अपराणि शुद्धवाक्यरूपाणि, अन्यान्युभयात्मकानि । अत्र यथाऽवैदिकानां तथा भट्टानुसारिणामपि मतं युक्तियुक्तं खण्डयित्वा निपुणं गुरुमतं स्थापयति शालिकनाथः । मुद्रितेऽप्यस्मिन् कतिपयानि प्रकरणानि त्रुटितानि । अपरोऽपि भाष्यपरिशिष्टन्नाम शालिकनाथकृतः प्रकरणग्रन्थः ।

मण्डनमिश्रकृतस्य विधिविवेकस्य न्यायकणिकाऽभिधानं व्याख्यानं तत्वबिन्दुसमाह्वयं भाट्टमतानुसारिशाब्दबोधग्रन्थञ्च विरचय्य षड्दर्शनीप्रवीणो वाचस्पतिरपि मीमांसाग्रन्थकाराणां गोष्ठ्यां

स्थानं लभते। अस्य ग्रन्थमवलोकयत एकैकस्य भायात् शास्त्रव्युत्पत्तिरस्य परिष्कृता निश्चिता विवेकशालिनी चतुरश्चेति । प्रकृत्या कठिना मण्डनमिश्रस्य शैली, नचेद्वाचस्पतेर्न्यायकणिकाऽवतीर्णा स्यात्, प्रायेण दुरवगाहा भवेत्। सति प्रसङ्गे न्यायकणिकायां वाचस्पतिरपहाय सूत्रोपन्यासादिकमधिकरणानि संगृह्य प्रदर्शयति । विस्तरेण विषयविचारे प्रसक्त तदवसाने प्रतिपादितमर्थं कारिकया संगृह्णाति। परिमितग्रन्थे तत्वबिन्दावयं वैयाकरणानां वेदान्तिनां प्राभाकराणां नैयायिकानां च शाब्दबोधविषये मतभेदान्निरस्य भाट्ट मतमतिचतुरमुपपादयति । एतन्निबन्धनेषु इदमेकमनितरसाधारणं चातुर्यं यत्तत्तदवलोकने तत्तन्मतैकानुसारी वाचस्पतिरित्यवलोकिता मन्वीत। मतविशेषविश्वासोऽस्य न मतान्तरोपपादनसमये धियं शबलयति, न वा लेखनमाविलयति ।

अथैतेषां कुमारिलप्रभाकरमण्डनमिश्रशालिकनाथवाचस्पतीनां कालं प्रति किञ्चिदुच्यते। प्रभाकरमण्डनमिश्रौ कुमारिलसमकालिकावित्यस्ति प्रवादः। न केवलं समकालिकाविति तच्छिष्याविपीति ऐतिह्यानि। तत्र श्लोकमपि कञ्चिदस्मच्छास्त्रिपादानां मुखादश्रौषम्।

उम्बेकः कारिकां वेत्ति तन्त्रं वेत्ति प्रभाकरः।
मण्डनस्तूभयं वेत्ति न किञ्चिद्वेत्ति रेभणः॥ इति

इदं तु न मे विश्वसनीयं भाति । शास्त्रविषये हि अत्यन्तभिन्नौ प्रभाकरकुमारिलयोः पन्थानौ। तत्र यदि कुमारिलस्य प्रभाकरो विदितः स्यात् अवश्यमेव हि तर्हि विरुद्धानां बहूनां विषयाणां मध्ये यं कमपि प्रभाकराभिमतं विषयमतिविस्तृतेषु कुमारिलग्रन्थेषु

क्वापि खण्डितमुपलभेमहि । नतु कञ्चिदुपलभामहे । तेन नैव कुमारिलः प्रभाकरं वेत्तीति न प्रभाकरः कुमारिलस्य समकालिकः नतरां प्राक्कालिकः किन्तु सर्वथा पश्चात्कालिक इति प्रतीमः । अपि च कुमारिलसम्मतस्यार्थस्य खण्डनाय प्रवृत्ततया क्वचित् प्रभाकरग्रन्थं शालिकनाथोऽवतारयतीति मद्रनगरराजकीयामुद्रितपुस्तकालयस्थस्य अस्मत्सुहृदो मुखाच्छृणवम् । तथा कुमारिलोक्तार्थदूषणपरतया प्रभाकरस्य ग्रन्थविशेषं पार्थसारथिमिश्र उदाहरतीति पूर्वमुक्तम् । बहुप्राचीनौ सन्तौ, शालिकनाथपार्थसारथिमिश्रौ प्रभाकरकुमारिलयोः पौर्वापर्यं न सम्यक् ज्ञातवन्तौ भवेतामिति नातीव शङ्कितुमुचितम् । तस्मान्न प्रभाकरः कुमारिलस्य समकालिकः ।

एवं मण्डनोऽपि न तत्समकालिको भवितुमर्हति । ऐतिह्यान्तरतो हि शङ्करकालिकमेनमाचक्षते । शङ्करकुमारिलौ पुनर्भिन्नकालिकाविति निश्चितम् । तत्र शङ्करसमकालिकेन मण्डनेन कथं तत्पूर्वशतकस्थितकुमारिलसमकालिकेन भवितुं शक्यम् ? मण्डनग्रन्थपर्यालोचनादेव चेदं स्पष्टं निश्चीयते । विधिविवेके हि कुमारिलस्येव प्रभाकरस्यापि मतं विस्तरेण खण्ड्यते । तेन कुमारिलानन्तरकालिकप्रभाकरानन्तरकालिको मण्डनः कुमारिलसमकालिक इति नोपपद्यते । एषां त्रयाणामपि पश्चात्कालिकः शालिकनाथ इति नात्र विवादगन्धः । तथा शालिकनाथोक्तं खण्डयन् वाचस्पतिस्तदनन्तरकालिक इति निश्चितम् ।

एवमेषां पञ्चानां मीमांसकानां पौर्वापर्यं स्थितम् । तत्र कुमारिलस्य कालं सप्तमं शतकं वदन्ति । तत्र प्रमाणम् । भर्तृहरिकृतवा-

क्यपदीयस्थश्लोकानां कुमारिलेन तन्त्रवार्तिके व्याकरणाधिकरणादिषूदाहरणात् तदनन्तरकालिकः कुमारिल इति स्पष्टं भवति । भर्तृहरिस्तु क्रि. प. 651—652 वर्षयोर्मध्ये लोकान्तरं जगामेति क्रि. प. 671 आरभ्य 695 पर्यन्तं अस्मिन् देशे यात्रां कृतवतश्चीनदेशीयस्य नाम्ना ऐ–ट्सिङ्–अस्य लेखनादवगम्यते। तथा शङ्करात् द्वाभ्यां सन्ततिभ्यां प्राचीनः कुमारिल इति निश्चितमिति । एवं सप्तमशतकस्योत्तरार्धे कुमारिल इति स्थिते सम्प्रति वाचस्पतिकालं पश्येम।

अस्य कालं प्रत्यनेकेऽनेकधा लिखन्ति । तत्र माक्स्मुल्लर् क्रि. प. 1150 इति । माक्डानल् समया क्रि. प. 1100 इति । वीबर् पुनः दशमं शतकमिति । अत्राद्यौ पक्षौ सर्वथाऽप्रामाणिकौ। भाति मे, प्रायेणोत्प्रेक्षामात्रसिद्धौ । तृतीयेतु पक्षे वाचस्पतेरेव वचनं स प्रमाणयति । तत्र वाचस्पतिः 898 मिते वर्षे स्वग्रन्थस्समापित इति ब्रूते । यदि शालिवाहनशकाब्दसङ्ख्यानमिदं तदा पाश्चात्यगणनया क्रि. प. 976 मितं वर्षं तदिति प्रतीयते । अतो दशमं शतकं तत्काल इति युक्तमिति । परन्तु वैक्रमाब्दसङ्ख्यानं तदिति ए. बि. कीत्–प्रभृतय आशेरते । एवं हि ते वदन्ति । यदि क्रि. प. 976 वर्षे वाचस्पतिरासीत् तर्हि क्रि. प. 983 वर्षे ग्रन्थो लिखित इति स्वयं वदतो न्यायाचार्यस्योदयनस्य समकालिको वाचस्पतिरिति वक्तव्यम् । न चैतद्युज्यते । रत्नकीर्तिर्नाम बौद्धतार्किकः स्वीयायामपोहासिद्धौ खण्डनाय बहुकृत्वः कण्ठरवेण वाचस्पतिं कीर्तयन् न क्वचिदुदयनं कीर्तयति । तेनोदयनात् प्राक् रत्नकीर्तिः ततः प्राचीनो

वाचस्पतिरिति सिध्यति । तदिदं, वाचस्पत्युक्ता सङ्ख्या वैक्रमाब्दस्येत्युच्यमाने समञ्जसं भवति । विक्रमाब्दगणनया हि 898 मितं वर्षं क्रि. प. 842 वर्षं भवतीति ।

ममापितु वाचस्पतिनिर्दिष्टं वैक्रमाब्दमेवेति, निश्चितं प्रमाणमनुपलभमानस्यापि दृढोऽभिसन्धिः । तथाऽपि तत्र तैरुच्यमाना युक्तिरनुपपन्नेति मे मतिर्भवति यतोऽपोहसिद्धं पश्यन्तो मन्यामहे सर्वथा रत्नकीर्तिरुदयनं जानातीति । कदाचिदिदं विमर्शकानामाश्चर्याय भवेत् यदुदयनकृतात्मतत्त्वविवेकस्थाः पङ्क्तय एव साक्षात् ईषद्विच्छेदविपर्यासाभ्यामपोहसिध्द्युपक्रमे[34] रत्नकीर्तिना पूर्वपक्षत्वेन लिख्यमाना उपलभ्यन्ते । रत्नकीर्तेरेव क्षणभङ्गसिद्धेरन्ते स्थितस्तत्सिद्धान्तसङ्ग्रहरूपः श्लोक आत्मतत्त्वविवेके उदयनेनानूद्यमानः[35] रत्नकीर्तिरप्युदयनस्य विदितः स्यादिति कामं संशयाय भवति । तथापि तस्यैव श्लोकस्य रत्नकीर्तिनैव तस्यामेव क्षणभङ्गसिद्धौ पूर्वत्र स्वाचार्योक्तत्वेनोदाहरणात् न तथा संशयितुमवकाशं पश्यामः ।

एवं रत्नकीर्तिमादाय उदयनवाचस्पत्योः कालव्यवधानसदसद्भावनिश्चयस्याशक्यत्वेपि ज्ञानश्रीरिति नाम्ना प्रसिद्धस्य बौद्धनैयायिकस्य ग्रन्था यदि लभ्येरन् तदा तन्निर्णयः सुकर इति भाति । उदयनो ह्यात्मतत्त्वविवेके[36] ज्ञानश्रियं नाम्ना कीर्तयति । सोऽयं ज्ञानश्रीर्यदि स्वग्रन्थेषु वाचस्पतिं कीर्तयेत् तदा स्पष्टमेवोदयनात् प्राचीनेन भवितव्यं वाचस्पतिनेति ।

अथ च यदि वाचस्पतिः क्रि. प. 843 वर्षे बभूव नैव शङ्करेण नवमशतकारम्भे स्थितेन भवितुं शक्यम् । शङ्करभाष्यखण्ड-

नाय हि ब्रह्मसूत्राणां भास्करो भाष्यान्तरमभाषिष्टेत्यतिप्रसिद्धम् । तदिदं भास्करभाष्यं पङ्क्तिशोऽनूद्य वाचस्पतिर्भामत्यां[37] खण्डयति। तत्कथं भवितुमर्हति यदि शङ्करवाचस्पत्योरेकद्वसन्तातिव्यवधानं नाभविष्यत् ।

एवं स्वकालानिर्देशं स्वयं कृतवतो वाचस्पतेरेव काले विशिष्य निर्णेतुमशक्ये तत्पूर्वतनानां प्रभाकरमण्डनमिश्रशालिकनाथानां कालस्येदन्त्वेन निर्णयः सुतरामशक्यो भवति । यदाहुः शङ्करसमकालिको मण्डन इति न तावता तयोस्समानवयस्कत्वं वक्तुमुचितमिति श्रीमन्तः शास्त्रिपादा अभिप्रयन्ति । न्यायमञ्जर्यां जयन्तभट्टेन प्रतिपादितरीत्या शब्दाद्वैतं सत्ताद्वैतं ज्ञानाद्वैतं आत्माद्वैतं इति बहुधा भिद्यमानेष्वद्वैतेषु एकतमावलम्बिनो मण्डनमिश्रस्य वार्धकेऽन्यतमावलम्बिनः शङ्करस्य मध्यमवयस्कत्वमिति तेषामाशयः। एवं सति क्रि. प. सप्तमशतकान्ते कुमारिलः अष्टमान्ते शङ्कर इति तयोर्मध्ये प्रभाकरमण्डनयोः कालो वक्तव्यः। न केवलमनयोरुभयोः अपरस्यापि तु कस्याचित् प्रभाकरग्रन्थव्याख्यातुस्तदानीं कालो वक्तव्यः । मण्डनादनन्तरं शालिकनाथ इव ततः पूर्वमपि कश्चिदन्यो व्याख्याता प्रभाकरग्रन्थस्यासीदिति न्यायकणिकायां[38] वाचस्पतेर्लेखनादवगम्यते। एषां त्रयाणां, उक्तः कुमारिलशङ्करमध्यकालोऽपर्याप्त इव भवति। सप्तमशतकान्ते कुमारिल इत्यत्रापि न मे दृढः प्रत्ययः। भर्तृहरेरनन्तरं हि धर्मकीर्तिः अस्मादनन्तरं च कुमारिलः । तत्र यदि भर्तृहरेः क्रि. प. 652 पर्यन्तः कालः तर्हि सप्तमोत्तरार्धे धर्मकीर्तिः अष्टमारम्भे कुमारिल इति कल्पनीयम् । तत्र पुनरपि शङ्कर-

कालकल्पना पीडिता भवति । एवमेतत्सर्वं यथा यथा विचार्यते तथा तथा व्यामोह एव भवतीति चीनदेशप्रयाणिनामपि लेखे तावन्तं विस्रंभं कर्तुमशक्नुवन्तः भर्तृहरिः धर्मकीर्तिः कुमारिलः प्रभाकरः तद्ग्रन्थव्याख्याता कश्चित् मण्डनः शङ्करः शालिकनाथभास्करौ वाचस्पतिः मंजुश्रीः उदयनः रत्नकीर्तिः इत्येते क्रमेणोत्तरोत्तरकालिका इत्येतावन्मात्रमभिधाय तिष्ठासामः ।

उदाहृतपूर्वे श्लोके प्रथमकीर्तित उव्वेकः श्लोकवार्तिकस्य कश्चिद्व्याख्यातेति सर्वदर्शनकौमुदीकारो लिखति। तत्पुनर्व्याख्यानमद्यास्तिनवेति विचारणीयम् । शास्त्रदीपिकातर्कपादव्याख्याता रामकृष्णोऽपि ग्रन्थोपक्रम एव ‘उक्तं च भट्टोव्वेकेन’ इत्युपक्रम्य किञ्चिल्लिखति । अयमुव्वेको भवभूतिरेवेति केषाञ्चिदभिप्राय इत्यपि शास्त्रिपादानां सकाशादेव मम विदितम् । भवभूतिकृतनाटकेष्वन्यतमस्य प्राचीनादर्शे क्वचित् ‘ उव्वेकापरनामधेयस्य भवभूतेः ’ इति लिखितमस्तीत्यपि त एवावोचन् । रेभणं प्रतितु न वयं किञ्चिद्विद्मो यस्मादयं मीमांसायां ‘ न किञ्चिद्वेत्ति ’

अथाद्य पार्थसारथिमिश्र उपतिष्ठते । गरीयानस्याभिनिवेशो भाट्टमते । मतान्तरोपरोधाद् भाट्टमतसंरक्षणगौरवं नान्यस्य विना पार्थसारथिमिश्रेण । सोपहासं सोल्लुण्ठनं सधिकारं साग्रहं सकोपं खण्डयत्येष प्रभाकरमतम् । अनेन तिरस्कृतस्य प्राभाकरमतस्य नाद्यावधि कश्चिदुद्धर्ता । संस्कृतभाषायामस्य स्वातन्त्र्यमत्यधिकम् । प्रायः सर्वेषामपि प्राचां ग्रन्थकृतामयमंशस्साधारणः । तथाऽपि परिहासे निन्दायामयं समर्थानि पदानि प्रयुञ्जानो विशिष्यते ।

अनेन कृताश्चत्वारो मीमांसाग्रन्थाः । तत्राद्यं तन्त्ररत्नम् । इदं जैमिनिसूत्राणां विस्तृतं व्याख्यानमिति प्रवादः । तञ्जापुरसरस्वतीमहाशालापुस्तकसूचिकायां बर्नल् अपि तथा लिखति । वस्तुतस्तु कुमारिलकृतायाः टुप्टीकाया इदं व्याख्यानम् । न्यायरत्नमाला नामापरो ग्रन्थः । भाट्टमतस्य कश्चिदयं प्रकरणग्रन्थः । द्वादशस्वध्यायेषु यत्र प्राभाकरादिमतमत्यन्तविरुद्धं तत्र तत्खण्डनाय प्रत्यध्यायमध्यायक्रमेण विषयविशेषाः विविच्य न्यायरत्नमालायां व्युत्पाद्यन्ते । प्रथमम-ध्ययनविधिवाक्ये परेषां मतं खण्डयितुं प्रयुक्तितिलकः प्रवृत्तः । द्वितीयसूत्रोक्तस्य विधिप्रामाण्यस्योपपादकतया ज्ञानानां स्वतःप्रामाण्येऽवश्यसाधनीये तत्र तीर्थान्तरकाराणां मतनिरासायानन्तरं स्वतः-प्रामाण्यनिर्णयः कृतः । ततश्चोदनारूपविधिनिर्णयः । अनन्तरं प्रत्यक्षसूत्रशेषतया व्याख्यातृभिर्निरूपितस्यानुमानस्य हेतुभूतां व्याप्तिं व्यवस्थापयति । पश्चात्प्रथमाध्यायस्य प्रथमपादोपान्ते सूत्रकारेण प्रसञ्जितं वाक्यार्थप्रकारं विमृशति । ततो द्वितीयचतुर्थे विचारितस्य नित्यकर्मणः काम्यकर्मापेक्षया विशेषं साधयति । एवमध्यायद्वयसम्बन्धिनि विचारे वृत्ते तृतीयप्रभृति द्वादशपर्यन्तं निरूपितं शेषत्वादिकं सह तत्तत्प्रमाणैः क्वचित् स्थूलं क्वचित् विशिष्य विचार्य ग्रन्थमवसाययति ।

अस्य तृतीयो ग्रन्थः शास्त्रदीपिका । अत्रेदम्प्रथमः प्रारम्भः सूत्राणि विहायाधिकरणार्थमात्रनिरूपणस्य । एतदनुसारी प्रवादोऽपि कश्चिदस्ति अधिकरणव्यवस्थापकः पार्थसारथिरिति । अत्र प्रायेण प्रत्यधिकरणं श्लोकेन श्लोकाभ्यां श्लोकैर्वा विवक्षितमर्थं संगृह्य त-

द्विवरणप्रायैर्वाक्यैः पूर्वपक्षसिद्धान्तौ प्रवर्त्येते । क्वचित् कृत्स्नमधिकरणं श्लोकात्मकम् । असकृदत्र निर्दिशति तन्त्ररत्नं न्यायरत्नमालामपि पार्थसारथिमिश्रः । बहुषु मीमांसाग्रन्थेषु अयमेको, बहूनि वर्षशतान्यासेतुहिमाचलं पठनपाठनेषु वर्तमानः । पार्थसारथिमिश्रस्य चतुर्थो निबन्धः श्लोकवार्तिकस्य प्रौढं व्याख्यानं न्यायरत्नाकरो नाम । अत्र पार्थसारथिः भिक्षुः दिङ्नागः धर्मकीर्तिः भर्तृमित्र इति बहून् कीर्तयति । शास्त्रदीपिकायामिवात्रापि सति प्रसङ्गेऽद्वैतवेदान्तिनां मतं साभिनिवेशं निराकरोति ।

शास्त्रदीपिकाश्लोकानां माधवाचार्येणोदाहरणात्ततः प्राचीनः पार्थसारथिरिति नास्ति विप्रबलेशोऽपि । क्रि. प. द्वादशारम्भे हलायुधानामा कोऽपि मीमांसासर्वस्वाभिधानस्य ग्रन्थस्य कर्ता बभूव । स तत्र तत्र पार्थसारथेर्न्यायरत्नमालामुदाहरतीति केचिल्लिखन्ति । पारमार्थिकं चेदिदं क्रि. प. एकादशादनर्वाचीनः पार्थसारथिरिति युक्तमङ्गीकर्तुम् । न केवलमेतावत् ततोऽपितु प्राचीनतरेण भवितव्यम् पार्थसारथिनेति भाति । मीमांसकसम्मतमुपमानमर्थापत्तिं शक्तिपदार्थञ्च बहुधा विकल्प्य खण्डयत्युदयनः । यद्यस्मादनन्तरकालिकः पार्थसारथिः मीमांसापरिपालनैकपरायणोऽयं किमिति तत्खण्डनं प्रत्युदासीनवान् भवेत् । न हि युक्तमनन्तरकालिकस्याप्यस्य न्यायाचार्य उदयनोऽविदित इति कल्पयितुम् । अत उदयनकालात् क्रि. प. दशमात् सर्वथा प्राचीनोऽयमिति निश्चीयते [39]।

अथाद्य सुचरितमिश्रभवनाथौ प्रति कियन्ति वचांसि । नैतन्मन्तव्यम् अत्रानयोः कथनेन पार्थसारथेरनन्तरकालिकत्वमनयोर्निश्चितमिति । परन्तु प्रकृते एतावदुक्तुं शक्यते यदिमौ न सर्वथाऽर्वाचीनौ क्रि. प. त्रयोदशात् यतः कवितार्किककेसरी (1248-1350) उभाविमौ सेश्वरमीमांसायां कीर्तयती[40]ति । तत्र सुचरितमिश्रः श्लोकवार्तिकव्याख्यानं काशिकाभिधानं चकारेति वदन्ति । भवनाथोऽपि द्वादशाध्यायार्थप्रतिपादकं निबन्धं मीमांसान्यायविवेकाभिधानं कमपि निबबन्धेति तत्र तत्र तदाशयमनुवदतां ग्रन्थकाराणां वचनतः केवलमवगम्यते । तन्मतानुवादपर्यालोचने स प्रभाकरमतानुरोधीत्यपि प्रतीमः ।

एवं क्रमेण विस्तृतां मीमांसां जैमिनीयन्यायमालायां श्लोकैस्संगृह्यानतिप्रचुरैर्वाक्यैः स्वयमेव तद्विवरणमपि माधवश्चकार । अस्य विवरणस्य न्यायमालाविस्तर इति नाम । अस्य 'भाट्टसारः' इति दक्षिणापथे प्रसिद्धिरिति तञ्जापुरसरस्वतीमाहाशालाग्रन्थसूचिकायां बर्नल् लिखति । वस्तुतो न वयं जानीमः तादृशो व्यवहारः सांप्रतमिहास्तीति । भाट्टसार इति तु ग्रन्थान्तरमस्ति ; यद्यपि मीमांसाशास्त्रे विशिष्य परिश्राम्यतां सुसूक्ष्मं न्यायविचारे नातीवायं ग्रन्थ उपयुज्यते तथाऽपि स्थूलं मीमांसां जिज्ञासमानानां सुलभतमोऽयमुपायः । अपिच विषयवाक्यार्थबोधने सर्वानपीतरान् ग्रन्थानपेक्ष्यायमुपयुक्ततरः । माधवोऽयं 1389 मिते आङ्गलवर्षे भुवमहासीदिति विमर्शका मन्यन्ते । कवितार्किकसिंहस्य समकालिकोऽयमिति प्रसिद्धमिदम् । तत्त्वमुक्ताकलापस्थश्लोकमपि सर्वदर्शनसंग्रहे माधवो

रामानुजमतप्रतिपादनावसरे उदाहरति[41] ।

अथ भट्टसोमेश्वरः । अद्यावधिर्मीमांसाकालः प्राचीनमध्यमनवीनभेदेन, तदा तदा कृतानां ग्रन्थानां शैलीमनुरुध्य विभागमर्हति । तत्र शबरान्तः प्राचीनः । माधवान्तो मध्यमः । अन्तिमस्तु सोमेश्वरादिरिति तद्ग्रन्थमवलोकयन्तो मन्यामहे । इदङ्कर्तृकं न्यायसुधाऽभिधानं अद्वितीयं तन्त्रवार्तिकव्याख्यानम् । अत्र लेखनशैली नवीनेति स्पष्टं प्रतीयते । नाहमेतदस्य सर्वथा नवीनत्वे मुख्यप्रमाणतयाऽऽश्रयामि । परन्तु मध्यमकालप्रबन्धेषु यावदहं जानामि तावत् न क्वचिदस्य नाम संकीर्त्यमानं दृश्यते । आपदेवप्रभृतयोऽर्वाचीनाः पुनरेतद्ग्रन्थमसकृदुदाहरन्ति । तेन मध्यमकालान्ते नवीनारम्भेऽस्य स्थानमुचितमिति यदि कल्पयेम तत्र तद्ग्रन्थशैली न प्रतीपं गच्छतीति भाति । अपिचास्ति सम्भावनायाः पदं कदाचिदसौ माधवाचार्यस्य पुत्रः स्यादिति[42] । यदि वास्तविकमिदं सम्यगिव विदितोऽयमस्माकं भवति । न्यायसुधायां सोमेश्वर आत्मकर्तृकं तन्त्रसाराभिधं निबन्धमनेकत्र निर्दिशति[43] । सोऽयन्तन्त्रसारोऽद्य वर्तते न वेति संशयः । मीमांसां विशिष्याधीयानानामत्यन्तमुपजीव्योऽयं सोमेश्वरः । सर्वथा तावद्युक्तं यदि वदेम एतदुपज्ञमर्वाचीनानां मीमांसाशास्त्रपरिष्कारसम्प्रदाय इति ।

एवमत्यन्तं प्रौढेषु मीमांसाग्रन्थेषु बहुषु लब्धप्रचारेषु सत्स्वपि तच्छास्त्रप्रवेशमभिलषतां बालानां सुग्रहः कोऽपि प्रकरणग्रन्थो नासीत् । अतस्तत्कृते प्रवृत्त आपदेवो मीमांसान्यायप्रकाशमकार्षीत् । अत्रावश्यकाधिकरणार्थनिरूपणपुरस्सरं उपदेशनिरूपणात्मकस्य पूर्व-

षट्कस्यार्थं क्रमेण सुललितमुपपादयत्यापदेवः । अयं षोडशशतकमध्ये बभूवेति सम्भाव्यते[44] । आपदेवीयस्य न्यायप्रकाशस्य व्याख्यानं भाट्टालंकारइति आपदेव पुत्रेणानन्तदेवेन कृतं यदिदानीं श्रीकाशीचौखाम्बापुस्तकालये मुद्यते ।

अथ कालस्स कोऽपि प्रादुर्बभूव यत्र दिग्गजकल्पा बहवो मीमांसानिपुणा अत्यन्तं परिष्कृत्य मीमांसां कृत्स्ने भारतवर्षे भृशं प्रथयाम्बभूवुः । तत्रादौ कीर्तनमर्हति तत्रभवान् अप्पय्यदीक्षितः । नेयमतीवातिशयोक्तिः अप्पय्यदीक्षितरूपेण मूर्तिमती मीमांसा बभूवेति । यत्किञ्चिदपि विषयीकृत्य लिखन्नयं मीमांसान्यायजातमनर्गळं वर्षति । नास्ति पूर्वं परत्र वाऽप्पय्यदीक्षितात् कश्चिन्मीमांसकः यस्मिन्नेतस्येव न्यायसञ्चारनैपुणं तादृशमाकलयेम । पार्थसारथिमपि क्वचित् परिहसन् खण्डदेवः अस्य शास्त्रेऽस्मिन् विद्यमानं भृशमाश्चर्यावहं स्वातन्त्र्यं वीक्ष्य विस्मयमानो 'मीमांसकमूर्धन्य' इत्येतमाह्वयति । मीमांसान्यायजटिलान् परिमलप्रभृतीन् ग्रन्थान् विनाऽनेन कृतः पूर्वमीमांसामात्रानुबन्धी निबन्धो विधिरसायनन्नाम । अत्र श्लोकमात्ररूपस्य मूलस्यैव विधिरसायनमिति नाम । तद्व्याख्यानभूतस्य वाक्यप्रबन्धस्यतु विधिरसायनसुखोपजीविनीति नामेति




यत्कुमारिलमतानुसारिणा निर्मितं विधिरसायनं मया ।
पद्यरूपमनातिस्फुटाशयं तत्सुखावगतये विविच्यते ।

इति तदुपक्रमस्थं पद्यमनुसरन् बर्नल् विविनक्ति । एतत्पद्यानुसारेण विधिरसायनसुखावबोधिनीति नाम युक्ततरमिति भाति । अत्र विधिलक्षणाक्षेपव्याजेन प्रायेण सर्वानेव द्वादशाध्यायीविषयान्

सुचतुरं निरूपयति दीक्षितः । पाण्डित्यं तावदस्य तथा कूलङ्कषं तथा तलस्पृक् यथाऽनेनाक्षिप्यमाणं शास्त्रमेव सर्वं दन्धनमिव दृश्यते । यथा स्वयमेव स वदति 'केषुचिद्दर्शयामः शैथिल्यं तद्विरुद्धं सकलमिव भवद्येन दृश्येत तन्त्रम्' [45] । अनेन शास्त्रदीपिकाऽपि व्याख्यातेति वदन्ति ।

मीमांसायां चतुरश्रपाण्डित्यः सोमनाथोऽनन्तरं पदमाटीकते । शास्त्रदीपिकाया मयूखमालिकान्नाम व्याख्यां प्रौढगम्भीरलळितामारचय्यायमपि मीमांसापरिष्करणगौरवेऽनल्पभागवान् भवति । मयूखमालिकायां तत्र तत्र विधिरसायनोक्तदूषणानि परिहरति । अपिच तत्र,विना भवनाथकपर्दिस्वामिशालिकनाथप्रभृतीन् नाम्ना भवदेवं कमपि मीमांसकं सोमनाथः कीर्तयति। सोऽयं भवदेवः कौस्तुभे खण्डदेवेन विधिरसायने अप्पय्यदीक्षितेन च कीर्त्यते । अनेन तौतातितमततिलको नाम मीमांसाग्रन्थः कृत इति जानीमः । एवं 'इति वरदराजीये, [46] इति बहुत्र सोमनाथ उदाहरति । कदाचिदेष तार्किकरक्षाकारो वरदराजः स्यात् । इदं वरदराजीयम् भवनाथकृतस्य मीमांसानयविवेकस्य व्याख्यानम् । अस्य नाम नयविवेकदीपिकेति ।

सोमनाथमधिकृत्य कोल् ब्रूक् लिखति 'सोमनाथः कश्चित् कर्नाटब्राह्मणः अस्याग्रभवो वेङ्कटाद्रौ विराजमाने महिते देवालयेऽर्चको बभूवे'ति [47] । सेयं वैदेशिकपण्डितानां साधारणी भ्रान्तिः । मयूखमालिकाया आरम्भे सोमनाथः कथयते 'अधिगत्य कलामखिलामग्रभवाद्वेङ्कटाद्रियज्वगुरो' रिति । अत्रत्यं वेङ्कटाद्रियज्वपदं तदग्रजन्मनो नामधेयमित्यनवगच्छन् कोल्ब्रूक् वेङ्कटाद्रावर्चक इति तदर्थं भ्रा-

न्था गृह्णातीति किमत्र साक्ष्यन्तरगवेषणमावश्यकम् ?

अपरः शास्त्रदीपिकाव्याख्याता शङ्करमिश्रो नाम । शास्त्रदीपिकाप्रकाश इति तस्य व्याख्यानस्याभिधानम् । ग्रन्थोऽयमद्यावधि न प्रकटितः । अनेन शङ्करमिश्रेण ग्रन्थान्तरमपि कृतं बालप्रकाश इति । ग्रन्थममुं पश्यत एकैकस्य भायात् यदयं विषयान् विविच्य चतुरं गणयितुमत्यन्तं प्रगल्भत इति । पार्थसारथिमिश्रे नितरां भाक्तिमतेऽस्मै नवीनानां स्वातन्त्र्येण शास्त्रविचारणधोरणी न रोचत इव । भट्टसोमेश्वराय कुपितोऽयं घोषयति

'परीपाकाच्छास्त्रे यदुदितमहो वार्तिककृता
तदज्ञात्वा सोमेश्वर इह बहुस्मान्यथयति ।'[48]

इति । अप्पय्यदीक्षित प्रत्ययमाह [49] 'तदेतदनतिक्षुण्णमीमांसान्यायानां विभीषिकामात्रमेव' '[50] यत्तु दृष्टार्थत्वं नियमविधिलक्षणमुक्तं दीक्षितैस्तदज्ञानमूलमेव' इति ।

मीमांसाया नवीनकाले प्रौढस्वतन्त्रग्रन्थकारगोष्ठ्यां चरमं पदं खण्डदेवस्य, चरमं न प्रौढ्यां न ग्रन्थगौरवे न वाऽऽन्यत्र, अपितु काले । अयं बहुश्रुतो बहुद्रष्टाऽप्रमादः विवेचनपटुः न्यायेतरपक्षपातरहितश्च । न केवलमर्वाचीनान् न केवलं पार्थसारथिं कुमारिलं शबरं वा साक्षात्सूत्रकारमपि महर्षिं जैमिनिं न्यायविरोधे न गणयत्यसौ । क्वचिदयमाह 'सूत्रोक्तयूपदृष्टान्तोऽप्यसङ्गत एव'इति[51] । अनेन कृतास्त्रयो मीमांसाग्रन्थाः । आद्यो मीमांसाकौस्तुभः अयं प्रथमाध्यायद्वितीयपादप्रभृति तृतीध्यायतृतीयपादपर्यन्तं सूत्राणां विस्तृतव्याख्यानरूपः । द्वितीयो ग्रन्थो भाट्टदीपिका । अधिक-

रणार्था भृशमत्र संगृह्यन्ते। तृतीयो भाट्टरहस्यमिति। अत्र मीमांसकमतानुरोधेन शाब्दबोधप्रक्रिया इतरमतनिरासपूर्वकं सम्यक् व्यवस्थाप्यते । खण्डदेवप्रसिद्ध्यनन्तरं किञ्चिदिव विरळः प्रचारः पार्थसारथिमिश्रग्रन्थानाम् ।

चतुर्ष्वमीषु महामीमांसकेष्वप्पय्यदीक्षितोऽन्येषां त्रयाणां विदित इति न सन्देहगन्धः यतस्त्रयोऽपि ते विधिरसायनमनूद्य खण्डयन्ति । सोमनाथः परिमलमपि कण्ठरवेण कीर्तयति [52] । सोमनाथशङ्करमिश्रयोः परस्परसंवेदनमासीदित्यत्र चिरादन्विष्यन्तोऽपि न वयं प्रमाणकल्पं किञ्चिदलभामहि । उभावपीमौ खण्डदेवस्य विदिताविति वक्तुमस्त्यवकाशः । यद्यपि नाम न क्वचित् गृह्णाति तथाऽपि तत्तदधिकरणपरिशीलने भवति निश्चितव्यं मयूखमालिकायां तत्र तत्र सोमनाथेनाभिहितान् विषयान्मनसि धृत्वैव खण्डदेवः स्वयं लिखतीति । तथा 'यत्तु कैश्चि' दित्यसकृत् भाट्टदीपिकायां यन्मतमनुवदति खण्डदेवः तत्सर्वं शङ्करमिश्रमतमिति स्पष्टं तद्ग्रन्थतोऽवगम्यते । विज्ञायेदं खण्डदेवान्तेवासी शम्भुभट्टः भाट्टदीपिकाव्याख्यायां स्वकृतायां प्रभावल्यां सोमनाथशङ्करमिश्रयोर्नाम गृह्णाति [53] । एवमेतेषां ग्रन्थमात्रावलम्बेन प्रथममप्पय्यदीक्षितः, अनन्तरं सोमनाथशङ्करमिश्रौ, अनन्तरं खण्डदेव इति क्रमः प्रतीयते। एतदनुरोधेन उभावुभावन्तराऽवरतः पञ्चाशतं वर्षाणि कल्पयित्वा विमर्शकानां तत्तत्कालकल्पनसम्प्रदायरीत्या विभिन्नकालिकत्वमेवैतेषां सिद्धान्तयितव्यं भवेत् यदि तत्र बाधकं किञ्चिन्न स्यात् । अस्तितु बाधकम् । तथाहि— जगन्नाथस्य पण्डितराजस्य अप्पय्यदीक्षितस्य च पारम्परिकानिन्दापर्यवसायी

समागमो बभूवेति सुप्रसिद्धमिदम्[54]। सोऽयं जगन्नाथो रसगङ्गाधरे आत्मनः पितरं खण्डदेवान्तेवासिनमाह[55]। तेन दीक्षितसमकालिकस्य जगन्नाथस्य पितुराचार्यः खण्डदेवो दीक्षितस्य विधिरसायनं खण्डयन् तत्समकालिक इत्यत्र किमस्ति शङ्काया अवसरः? एवञ्चेद्विदितविधि-रसायनौ खण्डदेवविदितस्वग्रन्थौ च सोमनाथशङ्करमिश्रावपि तत्स-मकालिकावेवेति न किं विना वचनं सिद्ध्यति? तस्माद्विधिरसाय-नमयूखमालिकाबालप्रकाशभाट्टदीपिकादिग्रन्थानां पौर्वापर्येऽपि चतु-र्णामेषां मीमांसकानां समानकालिकत्वमेवेत्यध्यवस्यामः । तत्र दीक्षितस्य जननकालः 1550 मितं वर्षमिति सप्रमाणन्निरूपयन्ति। तथा स ७२ वर्षाणि भुवि तस्थाविति । एतेन तत्कालः 1550-1622 इति सिद्धं भवति[56] । एष एवचान्येषामपि त्रयाणां समय इति तिष्ठत्विदम् ।

एतत्कालिको गागाभट्टोऽपि तैस्समानं पदमर्हति । अनेन कृतो भाट्टचिन्तामणिः। तर्कपाद एव केवलमिदानीं प्रकटितः । उद-यनदूषणानामुद्धारेष्वयं सुबहु व्याप्रियेत । वस्तुतो विश्वेश्वरनामा ऽसौ गागाभट्ट इति पितृलालनप्राप्तनाम्ना प्रसिद्ध इति स्वयं वदति। खण्डदेवस्य मीमांसागुरुरयमित्यैतिह्यम् ।

अतः परं मीमांसायाः परमनवीनः कालः । तत्र यद्यप्यति-प्रौढो ग्रन्थो नकश्चिदुत्पन्नः तथाऽपि मीमांसार्थसङ्ग्रहाय बहवः प्रवृ-त्ताः । कुवलयानन्दव्याख्याता वैद्यनाथभट्टः-क्रि. प. 1685-एकै-कस्याधिकरणस्यार्थं संगृह्य न्यायविन्दुनामानं ग्रन्थं चकार । एवं कृष्णयज्वना मीमांसापरिभाषा लौगाक्षिभास्करेणार्थसङ्ग्रहः, वासुदेव-

दीक्षितेनाध्वरमीमांसाकुतूहलवृत्तिः [57] , नारायणतीर्थमुनिना भाट्टभाषाप्रकाशः , रामेश्वरसूरिणा—क्रि. प. 1839—सुबोधिनी नाम सूत्रवृत्तिः , श्रीकृष्णतातयाचार्येण भाट्टसारः , कस्तूरिरङ्गाचार्येण सारबोधिनीनाम सूत्रवृत्तिश्च व्यरचि ।

विनाऽमूनि प्रकटीभूतानि मीमांसानिबन्धनानि सन्ति बहून्यन्यानि तत्तत्पुस्तकशालामात्रशरणानि । तत्रास्मद्विदितानीमानि—राघवानन्दकृता न्यायावलिदीधितिः , अप्पय्यदीक्षितभ्रातृपुत्रेणाप्पय्यदीक्षितेन कृता तन्त्रसिद्धान्तदीपिका दिनकरकृतं भाट्टदिनकरीयम् लक्ष्मणाचार्यस्य तन्त्रविलासः वाच्छेश्वरस्य भाट्टदीपिकाव्याख्यानं भाट्टचिन्तामणिरिति , रामकृष्णभट्टस्य पूर्वमीमांसाऽधिकरणकौमुदी , मुरारेरङ्गत्वनिरुक्तिः , विधिभूषणः कस्यापि , वेङ्कटाध्वरिणो मीमांसामकरन्दः , भास्कररायस्य भाट्टचन्द्रिकाभिधं भाट्टदीपिकाव्याख्यानम् , राजचूडामणिदीक्षितकृतस्तन्त्रशिखामणिः शास्त्रदीपिकाव्याख्यानञ्च कर्पूरवर्तिका नाम सुबोधिनी सुधासार इत्याख्याद्वयवती काचित् राणकव्याख्या तिरुमलाचार्यपुत्रेणान्नम्भट्टेन विरचितं राणकफक्किकाविवरणं गोविन्ददीक्षितपुत्रस्य वेङ्कटेश्वरमखिनो वार्तिकाभरणं नाम टुप्टीकाविवरणम् , फलवतीति काऽपि जैमिनिसूत्रवृत्तिः अनुभवानन्दापरनामधेयस्य गङ्गाम्बिकायज्ञनारायणदीक्षितस्य प्रभामण्डलं नाम शास्त्रदीपिकाव्याख्यानं अनन्तभट्टस्य शास्त्रमालावृत्तिः परितोषमिश्रस्य अजिता नाम तन्त्रवार्तिकव्याख्या अनन्तनारायणकृता विजया नाम अजिताव्याख्या चिदानन्दकृतो नीतितत्त्वाविर्भावः मुकुन्दानन्दयतिकृता नीतितत्त्वाविर्भावव्याख्या

परमेश्वरकृतो मीमांसासूत्रार्थसंग्रह इति । एवं प्रकरणपञ्चिकाव्याख्यानं किञ्चिदविदितकर्तृकमुपलभ्यते । तथाऽरुणाधिकरणविचारः गुणविधिः गुरुमतसंक्षेपः भावनाविचारः मत्वर्थलक्षणाविचारः मीमांसासिद्धान्तार्या विधिविचारः संख्यासुष्ट्वधिकरणाक्षेप इति बहवः क्षुद्रप्रबन्धाः ।

एतावत् प्रकृतेऽस्मद्विदितम् । कुत्र कोणे कियन्तोऽन्ये ग्रन्थास्सन्ति कियन्तोऽत्यन्तमभावं गताः को जानाति । दैवादद्य राजकीयाः प्राचीनपुस्तकान्वेषणे दृशं ददतीति तेभ्यो धन्यवादान् समर्पयन्त एवाधिकारमिममवसाययामः ।

---



# ॥ अथ प्रतिपाद्याधिकारश्चतुर्थः ॥



एवं मीमांसाशास्त्रसम्बन्धिनः प्रबन्धान् सह प्रबन्धृभिरवेदिष्म। इदानीं तत्प्रतिपाद्यमर्थं प्रति दृशं किञ्चिन्निदधीमहि।

आर्याणामिह जन्मनो मुख्यफलभूतन्तावद्धर्मानुष्ठानम्। तदनुष्ठानं फलावगतिं विना न सम्भवतीति फलं निरूपणीयम्। फलजनकत्वं धर्मस्य न साधनरहितस्येति साधनमपि विवेक्तव्यम्। इतोऽपि धर्मस्वरूपं सम्यग्विवेक्तव्यम्। एतावानर्थो यदि विप्रतिपन्नप्रमाणमूलो न तर्हि कार्यायालम्भविष्णुरिति तत्प्रमाणपरिशोधनमप्यावश्यकम्। एवमनुष्ठानहेतोर्धर्मस्य प्रमाणस्वरूपसाधनफलानि निस्सन्दिग्धं निर्णेतव्यानि। तत्र साधनमङ्गमिति पर्यायौ। तदिदमङ्गं यत्र तत्साध्यमङ्गि अनुष्ठीयते तत्र तदुपकाराय प्रयुज्यत इत्युत्सर्गोऽयं सर्वविदितः। क्वचित्पुनरङ्गिनोऽनुष्ठाने आवश्यकेऽपि तदर्थं तदङ्गानि न प्रयुज्यन्ते। तदङ्गप्रयोजकशक्तिरङ्गिनो नास्तीति विशेषोऽप्यस्ति। अत इदमस्य प्रयोजकमनुष्ठापकमिदन्नेति विशिष्य विज्ञेयं। एवं सम्प्रतिपन्नप्रमाणबलात् धर्मस्वरूपसाधनान्यवगम्य फलविशेषार्थं तेषु फलमभीप्सद्भिरनुष्ठीयमानेषु किं पूर्वं कर्तव्यं किमनन्तरमिति तत्तत्पौर्वापर्यनिश्चयोप्यवश्यापेक्षितः।

एतावता विना धर्मस्य प्रमाणस्वरूपफलानि त्रीणि, साधनानि तत्प्रयोजकाप्रयोजकौ तेषां प्रधानानाञ्च क्रम इत्येतान्यपि त्रीणि धर्मानुष्ठानायावश्यं वेदितव्यानीति दर्शितम्। तत्र साधनानामस्त्यपरो विचारगम्यो विशेषः। फलार्थमनुष्ठेयेषु धर्मशब्दाभिधेयेषु वेदबोधि-

तेषु कर्मसु केषांञ्चित्सन्निधौ साकल्येन तदङ्गानि पठ्यन्ते । अपरेषान्न । एतेषां कर्मणां फलविशेषायानुष्ठाने प्रसक्ते कानि साधनानीत्याकाङ्क्षायामन्यत्र पठितान्येवात्राप्यानेतव्यानीति प्रतीयते । सोऽयमतिदेश उच्यते । अत्र प्रथमं प्रमाणन्तावद्विमर्शनीयम् । सामान्यत एतत्प्रमाणेषु निर्धारितेष्वपि कस्मिन् कर्माणि कस्मात् कर्मणोऽङ्गान्यानीयन्त इति विशेषतोऽवगन्तव्यम् । आनीतान्यङ्गानि कानिचित् यथा पूर्वमनुष्ठितानि तथैवानुष्ठातव्यानि कानिचित् पुनरानयनस्थलवृत्तिपदार्थभेदानुरोधेनान्यथाकृत्यानुष्ठेयानि । तदिदमन्यथाकरणमूहं वदन्ति । किमङ्गं कुत्र कथमन्यथा कर्तव्यमित्येतत्परिज्ञानं विना यथोक्तमनुष्ठानं दुष्करमिति किमिदं वक्तव्यमपि । यत्राङ्गानि नाम्नातानि तत्रान्यतस्तेष्वपेक्षितेष्वन्यत्र यावन्ति सन्ति न तावन्ति सर्वाण्यानीयन्ते अपितु यान्येवापेक्षितोपकारकरणसमर्थानि तान्येव । अन्येषां नानयनं नानुष्ठानम् । सोऽयं बाधः । कस्य बाधः कस्य नेत्ययमपि विचारोऽत्यन्तमुपयुक्तोऽनुष्ठानस्य । एवमेते—एकस्मादन्यं प्रदेशं नीयमानानामङ्गानां प्रमाणम् , यतो नीयन्ते यत्र नीयन्ते तद्विशेषावधारणम् , ऊहः , बाध इति—चत्वारो विषया विशिष्य विज्ञातव्याः ।

अभीप्सितफलविशेषजनकं कर्म क्वचिदेकं क्वचिदनेकम् । एकफलजनकानामनेकेषां कर्मणां बहुशस्समानजातीयान्यङ्गानि विधीयन्ते । तत्र यदा कश्चित्पुमान् फलविशेषमभिलषन् तत्करणभूतानि कर्माण्येकस्मिन् काले कर्तुं यतते तदा किं यावन्ति प्रधानभूतानि कर्माणि सन्ति तावत्कृत्वः समानजातीयमप्येकैकमङ्गमावर्तनीयम् उत

सकृत्कृतमेव तत् सर्वेषामुपकाराय कल्पत इति भवति विशयः । तदिदमनेकेषां कृते सकृत्करणं तन्त्रशब्दाभिधेयम् । तत्र क्वचित्तन्त्रमङ्गानां क्वचिदावृत्तिरिति दुरूहः शास्त्रार्थोऽयं विना विचारं न शक्योऽवगन्तुम् । क्वचित्फलविशेषसिद्ध्यै तत्करणभूते प्रधानकर्मणि तदुपकारसिद्ध्ये तदङ्गेचानुष्ठीयमाने यदि निमित्तान्तरोपनिपातवशेन किमपि कर्मान्तरं , तादृशमेवाङ्गं स्वोपकारायापेक्षमाणं सत् कर्तव्यमापतति तदा किन्तत्र प्रथममन्यार्थं कृतेनैवाङ्गेन एतदुपकारोऽपि सम्पद्यते उत एतत्कृते पुनस्तदङ्गं पृथगनुष्ठेयमिति विमर्शे निर्धारणमावश्यकम् । एतदेवान्यार्थमनुष्ठितस्यान्योपकारकत्वं प्रसङ्ग इति व्यवह्रियते । एवमेते आहत्य द्वादश विषया धर्मानुष्ठानं सम्यगभिलषद्भिरसन्दिग्धमवगन्तव्या अंशा इति तत्तदुपयोगिन्यायनिरूपणाय

धर्मे प्रमाणं परस्परभेदेन स्वरूपं अङ्गत्वं प्रयोज्यप्रयोजकभावः पौर्वापर्यरूपः क्रमः फलभोक्तृत्वरूपोऽधिकारः सामान्यतोऽतिदेशः विशेषतोऽतिदेशः ऊहः बाधः तन्त्रं प्रसङ्ग इत्येवं क्रमेण एकैकस्यैकैकमध्यायं कल्पयन्महर्षिर्द्वादशाध्यायात्मकं मीमांसाशास्त्रं प्रवर्तयामास ।

शास्त्रमिदं पूर्वषट्कमुत्तरषट्कमति द्वेधा विभजन्ति । तत्र यथा द्वादशानामध्यायानामेकशास्त्रत्वे धर्मविचारात्मकत्वरूप एको धर्मो नियामकस्तथा प्रकृतविभागेऽप्येकैकषट्कसाधारणेन केनचिद्धर्मेण भवितव्यम् । अनेकेषां ह्येकार्थपरत्वेनैकत्वं भवति । यथाऽनेकेषां पदानामेकमर्थं प्रतिपादयितुं प्रवृत्तानामेकवाक्यत्वमिति । तथाभूतस्तु धर्मः पूर्वषट्कस्योपदेशविचारात्मकत्वं , उत्तरस्यातिदेशवि-

चारात्मकत्वमिति ब्रुवते । यथा पार्थसारथिमिश्रः 'उपदेशविचारे समाप्तेऽधुना तदधीनसिद्धिरतिदेशविचारः प्रस्तोष्यते' इति । अत्र लिखति सोमनाथः —पूर्व षट्के उपदेशविचारं समाप्येदानीमुत्तरषट्केऽतिदेशविचारो हेतुहेतुमद्भावसङ्गत्या प्रस्तोष्यत इत्यर्थः । इत्थं कुर्यादित्युपदेशपूर्वकत्वात्तद्वत्कुर्यादित्यातिदेशस्य तद्विचारयोरपि हेतुहेतुमद्भावः । इदञ्च षट्कद्वयार्थकथनं प्रायिकाभिप्रायम् । तेन प्रमाणस्योपदेशातिदेशसाधारणस्य पूर्वषट्के विचारेऽपि नानुपपत्तिः । न वा तन्त्रप्रसङ्गयोरुपदेशातिदेशसाधारणयोरुत्तरषट्के विचारेऽपीति बोध्यमिति । एतेन स्पष्टं प्रतीमो मीमांसाशास्त्रस्य षट्कद्वयात्मना विभागे नियामकं नातीवोपपन्नमिति । न केवलं प्राथमिकस्य प्रमाणाध्यायस्यैवोपदेशातिदेशसाधारणत्वं अपितु परस्परं भेदेन धर्मस्वरूपप्रतिपादकस्य द्वितीयस्य, अधिकारसिद्धये फलबोधकस्य षष्ठस्य चाध्यायस्य तथात्वन्तुल्यम् । अतः पूर्वषट्के तृतीयचतुर्थपञ्चमानां त्रयाणामेव यत्राङ्गान्युपदिश्यन्ते तद्विचारात्मकत्वम् । एवञ्च पूर्वषट्कमुपदेशविचारात्मकमिति व्यवहारस्य यथा कथंचिदुपपत्तावपि वस्तुतत्वमनुरुध्य उपदेशविचारोऽतिदेशविचार उभयसाधारणविचार इति विभागो युज्यते तराम् । अथवा नात्र विभाजकं धर्मविशेषमवलम्ब्य तदनुरोधेन विभागोऽयम् । अपि त्ववयविनमेकमर्धशो विभज्य पूर्वोत्तरभागभेदेन व्यवहर्तुं लोकाः स्वाभाविकप्रवृत्तयः । एवमेव प्रकृतेऽपि । तत्रोत्तरभागस्यातिदेशोपक्रमत्वात् भावार्थपादः (द्वितीयाध्यायस्य प्रथमः पादः) रथन्तरपाद (द्वितीयस्य तृतीयः) इत्यादिवदतिदेशविचारात्मकत्वव्यवहारः । एतद्भिन्नत्वेन च

पूर्वस्य अतिदेशप्रतियोग्युपदेशपरत्वमुच्यत इति तिष्ठत्वेतत् ।

अध्यायानामप्यभेदे एकविषयपरत्वं भेदे भिन्नविषयपरत्वन्नियामकम् । तत्र द्वादशानामध्यायानां द्वादश विषया इत्युक्तमेव । अध्याया अप्यनेकपादघटिताः । तत्रैकैकस्याध्यायस्य चत्वारः पादाः । तृतीयषष्ठदशमानां पुनरष्टौ । पादानामप्यभेदे समानविषयकत्वं भेदेऽन्यथात्वंच हेतुः । तत्र योऽध्यायार्थः, सामान्यतस्तद्विषयकत्वेन अध्यायघटकानां पादानां सर्वेषामभिन्नविषयकत्वेऽपि तादृशाध्यायार्थस्य विशेषभेदमादाय पादानां भिन्नविषयकत्वम् । एकैकः पादोऽपि प्रायेणानेकाधिकरणघटितः । तत्र प्रत्यधिकरणं विषयः संशयः पूर्वपक्षः सिद्धान्तः प्रयोजनमिति पञ्चावयवाः । तत्र न सर्वेऽवयवास्सूत्रकारेण प्रतिपाद्यन्ते । बहुत्र विषयपूर्वपक्षसिद्धान्तानयं सूत्रयति । पूर्वपक्षसिद्धान्तयुक्तिप्रतिपादने हि तत्तत्कोटिकस्संशयोऽपि वचनमन्तरेण सुबोध एवेति नास्य सङ्क्षेपदत्तदृष्टिभिस्सूत्रैः प्रतिपादनावश्यकता । प्रयोजनमपि क्वचित् क्वचिदेव सूत्रेण प्रतिपादितम् । अनेकत्र सिद्धान्तसूत्रमेकमेव दृश्यते । तत्रान्येऽवयवा अभ्यूह्यन्ते । साकममीभिः पञ्चभिरवयवैरेकैकस्मिन्नधिकरणे सङ्गतिनिरूपणे मीमांसका अत्यन्तमवधानं कलयन्ति । सेयं शास्त्रसङ्गतिषट्कसङ्गतिरध्यायसङ्गतिः पादसङ्गतिः पेटिकासङ्गतिरनन्तरसङ्गतिरिति षोढा निरूप्यते । सङ्गतिमपि केचिदधिकरणशरीरेऽन्तर्भाव्य षडवयवं तत्प्रचक्षते । अन्ये प्रयोजनमपोद्धृत्य सङ्गतिं घटयित्वा पञ्चाङ्गत्वमुशन्ति । इतरे पुनरधिकरणस्य दशाङ्गान्याहुरिति पुरा प्रतिपाद्यते । यथाऽध्यायस्यैकदेशः पाद इत्यभिधीयते तथा पादस्यैकदेशः एकमेव विषयं विषयीकृत्य प्रवृत्तानां त्रि-

चतुराणां पञ्चषाणां वाऽधिकरणानां समुदायात्मा पेटिकेत्युच्यते । यथा प्रथमचतुर्थे तत्सिद्धिपेटिका, तृतीयद्वितीये भक्षपेटिका, षष्ठेपञ्चमेऽभ्युदितेष्टिपेटिका, दशमद्वितीये अस्थियज्ञपेटिकेति ।

एवं विभक्तविभागेनाधिकरणपर्यन्तमागत्यावगततत्स्वरूपास्सम्प्रति स्थूलमधिकरणप्रतिपाद्यमर्थमाकलयेम । तत्र मानाधीना मेयसिद्धिरिति न्यायेन प्रतिपाद्यप्रतिपादनस्य प्रमाणनिरूपणाधीनत्वात्प्रथमं प्रमाणनिरूपणपरोऽध्यायः । तत्र यद्धर्मशास्त्रकारा वदन्ति 'वेदोऽखिलो धर्ममूलं' 'तद्विदाञ्च स्मृतिशीले' इति तत्तथैव मीमांसाप्रवर्तकस्य महर्षेस्सम्मतम् । अतोऽसौ तेषामेव धर्मे प्रामाण्यं कृत्स्नेन प्रथमाध्यायेन स्थापयति । तत्र समस्तस्य नैकरूपेण प्रामाण्यमिति, वेदो द्विविधो मन्त्रब्राह्मणभेदात्, ब्राह्मणमपि द्विविधं विध्यर्थवादभेदादिति विभागमभिसन्धाय प्रथमं क्रमेण विध्यर्थवाद-मन्त्राणां प्रामाण्यप्रकारः प्रतिपाद्यते । यद्यपि विध्यर्थवादमन्त्रभेदेन त्रिविधो वेद इति विभागोऽपि युक्तो भाति तथाऽपि जैमिनिना 'तच्चोदकेषु मन्त्राख्या' 'शेषे ब्राह्मणशब्दः' इति विध्यर्थवादोभयवृत्तिब्राह्मणत्वस्य मन्त्रत्वतुल्यकक्ष्यतयोपादानेन पूर्वोक्तो विभाग एव तत्सम्मत इति प्रतीमः । तत्र विधिप्रामाण्यनिरूपणपरस्य प्रथमपादस्याष्टाधिकरणानि । तेषु प्रथमे 'अथातो धर्मजिज्ञासे'ति सूत्रेणोपरिष्टात् करिष्यमाणं विचारं सूत्रकारः प्रस्तौति । तत्तद्ग्रन्थेषु दृश्यमान-'मथातः' प्रयोगं समालोचयतां ग्रन्थारम्भे सर्वत्रारम्भद्योतकम् 'अथात' इति पदद्वयं प्रयुज्यत इति प्राचां कोऽपि सम्प्रदाय आसीदिति प्रतिभायात् । तद्वदेव प्रकृतेऽपीति युक्तमस्मि मन्ये। तथाऽपि

ऽम्भवन्नर्थो न परित्याज्य इति मन्यमानाः ‘अथ वेदाध्ययनानन्तरम्’ अतः अध्ययनस्य वृत्तत्वाद्धेतो’रिति व्याख्यातारो व्याचक्षते । एवं प्रस्तावमात्रपरत्वेऽधिकरणशरीरनिष्पत्तिर्नसम्पद्यत इति उपरि प्रस्तोष्यमाणं मीमांसाभिधानं विचारं बिषयीकृत्य सोऽयं विधिविहितो नवेति सन्देहमुद्भाव्य स्मृतिविशेषप्रकोपप्रदर्शनेनाविहितत्वं पूर्वपक्षीकृत्य तत्समाधानपुरस्सरं युक्त्यन्तरेण वैधत्वं सिद्धान्तयित्वा सम्पूर्णमधिकरणं वृत्तिकारप्रभृतयो वर्णयन्ति । एवमेव क्वचित्करिष्यमाणविचारप्रतिज्ञामात्रपरं सूत्रं क्वचिल्लक्षणपरं क्वचित्पदविशेषव्याख्यानरूपं क्वचिद्विभागप्रवृत्तमिति बहुविधेषु सूत्रेषु अधिकरणैकदेशप्रतिपादनेऽप्यौदासीन्यमवलम्बमानेषु तत्र तत्र व्याख्यानकाराणामधिकरणकल्पना प्रवर्तते । वयन्तु सूत्रमात्रावलम्बेनोपरि गच्छे- । द्वादशाध्यायोपोद्घातभूतेऽस्मिन्नाद्याधिकरणे वृत्ते तत्र विचार्यया कीर्तितो धर्मः किंलक्षणः किंस्वरूप इति तल्लक्षणस्वरूपविविदिषायां द्वितीयमधिकरणमेकसूत्रं प्रवर्तते ‘चोदनालक्षणोऽर्थो धर्मः’ ते । विधिप्रमाणकः श्रेयस्करो धर्म इत्यस्यार्थः । अत्र यदि यो धर्मः चोदनालक्षणः, विधिप्रमाणकः, इत्यन्वयः तदा धर्मस्य चोदनालक्षणत्वं लक्षणमुक्तं भवति । एवं सत्यर्थाद्यो विधिप्रमाणकस्सएव धर्म ते प्रतीयते । यदि तु यश्चोदनालक्षणस्स धर्म इति सूत्रेऽन्वयः दा शब्दतो धर्मस्वरूपमुक्तं भवति । अर्थात्तु यो धर्मस्स विधिप्रमाणक इति लभ्यते । सर्वथा तावत् श्रुत्यर्थाभ्यां धर्मस्य लक्षणस्वरूपे अत्र प्रतिपादिते इति निरूपयन्ति निपुणाः । अनन्तरं चो-

सारथेर्वचनम्--"निमित्तसूत्रे तु प्रथमद्वितीयसूत्रमात्रालोचनया 'वेदो धर्ममूल' मित्यादिवदुपदेशशास्त्रताशङ्का माभूदिति परीक्षाशास्त्रमेवेद-मिति ज्ञापयितुं परीक्षाप्रतिज्ञानम् । यद्यपि चोपरितनव्यापारादेव परीक्षाशास्त्रत्वं गम्यते, तथाऽपि वक्ष्यमाणमेव श्रोतृबुद्धिसमाधानाय कीर्तित" मिति ।

धर्मश्चोदनाऽपरपर्यायविधिप्रमाणक इत्युक्ते तदितरस्य प्रत्य-क्षादेः कथन्न धर्मप्रामाण्यं सम्भवति, तस्य वा कथन्तत्र नियतं प्रा-माण्यमिति चोद्यं परिजिहीर्षुर्महर्षिः 'चोदनालक्षण' इत्यत्र 'असति बाधके सर्वं वाक्यं सावधारण'मिति न्यायेन 'चोदनैव लक्षणं यस्य', 'चोदना लक्षणमेव यस्ये'ति द्वेधाऽप्यर्थमभिसन्धत्त इति गम्यते । तत्र चोदनैव धर्मे प्रमाणं नान्यदिति प्रतिज्ञातमर्थं साधयितुं चतुर्थमधि-करणम् । अत्रेन्द्रियार्थसन्निकर्षजन्यत्वं प्रत्यक्षस्य लक्षणम्, अतः कालान्तरभाविनि फले इन्द्रियार्थसन्निकर्षासम्भवात् तत्साधनत्वेन धर्मस्य प्रत्यक्षन्न सम्भवतीति न धर्मे प्रत्यक्षं प्रमाणमिति साक्षात्सूत्रेण प्रतिपाद्य प्रत्यक्षोपजीविनामनुमानादीनां नतरां तत्र प्रामाण्यमिति महर्षिरर्थाल्लभ्यममन्यत ।

अनन्तरं द्वितीयसूत्रेऽभिसंहितः 'चोदना लक्षणमेवेत्ययमंश-स्साधयितव्यः । तत्र प्रामाण्यस्य बाधकं अप्रामाण्यहेतुर्वा यद्यदाशङ्क्ये त तन्निरासे कृते प्रामाण्यं स्वतस्सिद्ध्यति । लोके तावद्यो नाम भ्रान्त्या प्रमादेनाशक्त्या विप्रलिप्सया वा शब्दान्प्रयुङ्क्ते तस्य तद्वचन-मप्रमाणं दृष्टम् नान्यस्य । तदन्वयव्यतिरेकाभ्यां चत्वार इमे शब्दा-प्रामाण्यहेतवो निर्धार्यन्ते । त इमे पुरुषदोषाः।इह जन्मवता केनचि-

पुरुषेण न सर्वथाऽभ्रान्तेनाप्रमत्तेन वा भवितुं शक्यमिति पुरुषधर्मो यं । एवं भ्रान्त्यादिद्वारा पुरुषसंबन्ध एव शब्दानामप्रमाण्ये निदानमेति निश्चप्रचम्। सोऽयं पुरुषसंबन्धस्तावन्निरसितव्यो यदि चोदनानामाण्यं साधयितव्यम् । तत्कृते प्रवृत्तानि उत्तराण्यधिकरणानि ।

त्रेधा नाम संभाव्यते शब्दानां पुरुषसंबधः— वृद्धिपदस्य वर्णविशेषेषु पाणिनेरिव संकेतद्वारा, पदैः पदार्थमात्रप्रतिपादनेऽपि पदार्थानां परस्परसंसर्गरूपवाक्यार्थे वाक्यस्य संकेतद्वारा, रघुवंशादौ कालिदासादेरिव शब्दसंदर्भसंदृब्धृत्वेन वा । तत्र चोदनानामादिमप्रकारेण पुरुषसंबन्धो नास्तीति प्रतिपादयितुं पंचमाधिकरणप्रवृत्तिः । तत्र शब्दानामर्थानांच प्रत्याय्यप्रत्यायकभावरूपस्संबंधः स्वतस्सिद्धः सर्वदातन इति कथयन्महर्षिस्तदंशे पुरुषसंबन्धापेक्षां निरस्यति । कदाचिदस्य सूत्रकारस्य न तथा सूक्ष्मावगाहिनी शेमुषी यथा सांप्रतिकानां, यतोऽसौ शब्देरर्थप्रत्यायनस्य प्रकारं मूलं वा परिचिन्तयन् ' पूपू"म तं वौ. वौ मतंवा नोपलभतेस्म । अत्र शब्दस्य नित्यत्वेहि तद्गतस्यार्थसंबंधस्य नित्यत्वं भवेदित्याक्षेपव्युदासाय शब्दनित्यत्वसाधकं षष्ठमधिकरणं । पूर्वोक्तद्वितीयप्रकारेण पुरुषसंबंधं चोदनानां वारयितुं वाक्यतो वाक्यार्थबुद्धौ न पृथक्संकेतोऽपेक्षितः पदेभ्यः पदार्थेषु बुद्धेष्वाकांक्षावशात्तेषां मिथस्संसर्गविशेषो वाक्यार्थाभिधानोऽवगम्यत इति सप्तमाधिकरणेन निरूप्यते .

एतत्पादान्त्यन्तु अष्टममधिकरणं तृतीयविधया पुरुषसंबन्धं निषेधति । अयन्तावदेतधिकरणसारांशः । काठकं कालापकमिति

[illegible]

त्वात् कर्तृत्वसम्बन्धं विना पुरुषशब्दसन्दर्भयोरन्यादृशस्य संबन्धस्यानुपपत्तिरिति वेदस्य पौरुषेयत्वे हेतुस्सम्भाव्येत । तथाऽनित्यानामाधुनिकानां पुरुषाणां देशानान्नदीनां वा कीर्तनं वेदे, अस्य तादृशपुरुषादिप्राक्काले अभूतत्वमवगमयतीति । तदिदं पूर्वपक्षहेतुद्वितयं सूत्राभ्यामाह जैमिनिः 'वेदांश्चैके सन्निकर्षं पुरुषाख्याः' 'अनित्यदर्शनाच्च' इति । तत्राद्यं हेतुं 'आख्या प्रवचनात्' इति सूत्रेण सूत्रकारो निरास । तत्र शबरस्वामी लिखति—यदुक्तं कर्तृलक्षणा समाख्या काठकाद्येति तदुच्यते....अकर्तृभिरपि ह्येनामाचक्षीरन् । प्रकर्षेण वचनमनन्यसाधारणम् कठादिभिरनुष्ठितं स्यात् । तथाऽपि हि समाख्यातारो भवन्ति । स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी । कठः पुनरिमां केवलां शाखामध्यापयाम्बभूवेति । स बहुशाखाध्यायिनां सन्निधौ एकशाखाध्यायी अन्यां शाखामनधीयानः । तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणमिति ।

द्वितीयः पुनर्वेदपौरुषेयत्वहेतुः 'परन्तु श्रुतिसामान्य' मिति परिजह्रे । तत्र भाष्यम् – यच्च प्रावाहणिरिति (अनित्यदर्शनाच्चेति सूत्रे इदमुक्तम्- जननमरणवन्तश्च वेदार्थाः श्रूयन्ते । बबरः प्रावाहणिरकामयत कुसुरुविन्द औद्दालकिरकामयतेत्येवमादयः । उद्दालकस्यापत्यं गम्यते औद्दालकिः । यद्येवं, प्रागौद्दालकिजन्मनो नायं ग्रन्थो भूतपूर्वः । एवमप्यनित्यता-- इति ) तन्न । प्रवाहणस्य पुरुषस्यासिद्धत्वात् न प्रवाहणस्यापत्यं प्रावाहणिः । प्रशब्दः प्रकर्षे सिद्धः । वहतिश्च प्रापणे । नत्वस्य समुदायः क्वचित्सिद्धः । इकारस्तु यथैवापत्ये सिद्धस्तथा क्रियायामपि कर्तरि । तस्माद्यः प्रवाह-

ं स प्रावाहणिः । बबर इति शब्दानुकृतिः । तेन यो नित्योऽर्थ-
मेवैतौ शब्दौ वदिष्यतः । अत उक्तं परन्तु श्रुतिसामान्यमात्र
ति इति ।

एवं वेदस्य पौरुषेयत्वे हेतुतया शंक्यमानयोस्समाख्याना-
त्यदर्शनयोरन्यथासिद्धिं प्रतिपादयाम्बभूवु ' जैमिनिप्रभृतयो वेदा-
चिन्तापराः ' । शब्दसन्दर्भस्यावश्यमेव केनचिन्निर्मात्रा भवितव्य-
ति सामान्यतः कर्तरि संभाविते तदानुगुण्येन च समाख्यानादा-
पद्यमाने काचिदेषा कुसृष्टिर्वैदिकानामिति शङ्काविभ्रमो दुष्परिहरः।
त्राप्याह ' उक्तन्तु शब्दपूर्वत्व' मिति । तादिदं विवरीतुं प्रवृत्ता अ-
युक्ता लिखन्ति । यत्तावद्वाक्यत्वात्पौरुषेयत्वानुमानं तद्विपक्षे बाध-
ाभावेन निरस्तम्। यदि वेदवाक्यान्यपौरुषेयाणि किन्तत्रापहीयते?
र्तारमन्तरेण रचना कथं स्यादिति चेन्न । अध्ययनरूपस्य पार-
न्र्येण रचनस्याद्यत्ववत्सर्वदोपपत्तेः । एनया दिशा विपक्षे बाधकं
ास्ति । अस्ति तु पक्षे बाधकम् । नह्यसौ कर्ताऽस्मदादिभिरुपल-
्यते । नच जीर्णकूपारामादिवत्कर्तुरस्मरणमिति वाच्यम् । प्रमाणा-
तरागोचरकालान्तरभाविफलसाधनबहुवित्तव्ययकायक्लेशादिपूर्वकप्रवृ-
त्तिसाध्ये वक्तृप्रत्ययमन्तरेण प्रेक्षावतामनुष्ठानासम्भवात् । जीर्ण-
कूपादिषु तु देशोच्छेदादिना पुरुषविच्छेदात्प्रयोजनाभावाच्च कर्त्रस्मर-
णम् । इहत्वनन्तैः पुरुषैरस्खलितमात्रास्वरवर्णसन्दर्भमध्येतृपरम्पर-
याऽधीयमाने सति प्रयोजनवतिच कर्तुर्विस्मरणन्न युक्तम् । अतोऽव-
श्यस्मर्तव्यस्य कर्तुरस्मरणादवगम्यते नासावस्तीति । यत्तु वैशेषि-

कर्तृविशेषस्य स्मरणं तैरपि वक्तुं शक्यम् । अपितु केनचित्सामान्यतो दृष्टेनानुमितः कर्ता यौक्तिकैस्तदनुसारिभिश्च कैश्चिदनुस्मर्यते । अत एवहि तेषां कर्तृविशेषविवादः प्रजापतिर्वा पशुपतिर्वा हिरण्यगर्भो वेति । परम्परया स्मर्यमाणो हि कर्ता बुद्धादिवन्मन्वादिवच्च न विहीयेत । अतो दृश्यादर्शनबाधितमेवेदमनुमानम्................तदेवन्न वेदकर्तेति सर्वदा परतन्त्रपुरुषपरम्पराधीता एव वेदाः । तदेतत्सर्वमभिसन्धाय सूत्रितम् उक्तन्तु शब्दपूर्वत्वमिति । सर्वेषामध्येतॄणां वेदोच्चारणप्रवाहस्य पूर्वपूर्वोच्चारणरूपशब्दपूर्वत्वमुक्तमिति । एतदधिकरणोपष्टम्भेन वैदिकाः केचिदेवमाक्रन्दन्ति- एवं प्राचीनेषु वेदस्य नित्यत्वं, अपौरुषेयत्वं, सहृदयं साधयत्सु, उपपत्तिमदित्यवधारयत्सु, तदेकसन्ततीनामस्माकं संसर्गविशेषेण नवीननागरकीभूय विराजमानानां सर्वथाऽसम्बद्धोयं विषय इति न संदेहः, निश्चयस्तु निरूढमूलः । सन्ति भूयांसस्तथाविधास्समाचाराः प्राचामार्यपूरुषाणां यथा आपातप्रतीतेरनुपयुक्ता इव प्रतीयमानास्सन्तः सावधानं परिचिन्त्यमानाः महागौरवार्हं रहस्यं किमप्यन्तर्दधति । तदिदमनालोचयन्त एकपदे तदुक्तमन्यथयन्तः कदाचिदात्मानं प्रतारितवन्तो भवेम । स हि सम्प्रदायोऽनादिकालमारभ्य विविधवैचित्र्यशालिनीविवेचनपटीयसीः पुरुषाणां मतिततीरतीत्याद्य वर्तते । इदन्तु समालोचयन्तु विवेक्तारो यदेते शास्त्रकृतो वदन्ति । वेदस्य वाक्यत्वेन पौरुषेयत्वानुमानन्न सम्भवति विपक्षे बाधकाभावादिति । तत्र प्रतिवादिना कीदृशमुत्तरन्दातुं शक्यम् ! शब्दसन्दर्भात्मकोऽपि वेदोऽपौ-

वा विना न किमपि वक्तुं शक्यते । किन्तु सूक्ष्मं विमृश्यमाने विशदा मतिर्भविष्यति । जगति एकैकञ्च सर्वञ्चोत्सर्गापवादसहितम् । तत्र लोकवृत्तमीषज्जानता उत्सर्गवद्वाऽपवादस्यापवादवद्वोत्सर्गस्य भवनं नापादनीयं । न वा तत्र सन्देहस्समुचितः । तेन लौकिकसन्दर्भाणामुत्पादशालित्वेऽपि सकर्तृकत्वेऽपि वेदस्यातथाभावे न तद्बाधकं न वा विरुद्धम् ।

अथापि कोऽपि प्रतिबन्ध्योत्तरयेत एवं रघुवंशोऽपि देशान्तरीयवेदोऽपि बौद्धागमोऽप्यपौरुषेयः स्यादिति । अत्र बादरीतिमवलम्ब्य शास्त्रपठितिनो ब्रूयुः किमेतावता वेदापौरुषेयत्वस्य हीनमिति । तत्वत इयं प्रतिबन्ध्येव रघुवंशादीनां पौरुषेयत्वमवगमयति । एवं प्रतिबन्दीवादिना हि सर्वतः कालिदासो रघुवंशं सन्दृब्धवानिति सङ्कीर्तितमाकर्ण्य तस्य पौरुषेयत्वान्निश्चित्य वेदस्यापौरुषेयत्वेऽस्यापि स्यादिति वस्तुतोऽविद्यमानमेवापौरुषेयत्वमापादयितव्यम् । तथाच कालिदासादीनां तत्कर्तृत्वेन चिराय प्रवर्तमानं स्मरणमेव तत्रापौरुषेयत्वे बाधकमिति । एवन्त्वभिसन्दधानः कुमारिलः तथा प्रतिबन्दीप्रयोक्तारं यदेव भवतां गोत्रं तदेव ममापीति ब्रुवाणेन जामात्रा उपमित्य जहास, यस्य स्वारस्यं संस्कृतपरिचयवतां पाश्चात्यानामग्रणीः माक्स्मुल्लर् अपि यथावदवगन्तुं चस्खाल ।

स एष माक्स्मुल्लर् स्वयमङ्गीकरोति यद्यपि क्रि. प्रा. अवरतो द्वे पञ्चापि वा वर्षसहस्राणि वृत्तानि वेदस्य जगत्याविर्भूतस्येति वदेम तथाऽपि न तत्र किमपि बाधकमस्तीति । परन्तु अनल्पेन परिचयेन स प्राच्यविद्यारामणीयकेन तत्वेन सारभूतेन च परवशी-

क्रियमाणोऽपि चिरप्ररूढवासनान्तरस्य द्रढीयस्तया मध्ये मध्ये मतान्तरावलम्बिनं विमर्शकमात्मानमाकलयन् तादृशसाहसस्य किं फलमिति पृच्छति। विवेचकास्सम्पश्यन्ताम्–बाधकविरहेऽपि वेदस्य तथाचिरन्तनत्वाङ्गीकारं साहसमेष मन्यते, नतु पुनर्भारतीयैरैककण्ठ्येन कथ्यमानस्य तथात्वस्यैकपदेऽपलपनम्। अथवा स्वतन्त्रा नामाद्यत्वे विमर्शका इति।

एवञ्चोदनाप्रामाण्याय कृत्स्नस्य वेदस्यापौरुषत्वे साधिते मन्त्रार्थवादयोरपि तयैव रीत्या तत् सिद्धम्। तथाऽपितु विधिभागस्येवापूर्वार्थप्रतिपादकत्वविरहेण प्रामाण्ये आक्षिप्ते तत्समाधानाय द्वितीयपादारम्भः। मन्त्रार्थवादभेदेनानेकार्थकत्वं पादस्य परिहरन्तो विध्यतिरिक्तवेदवाक्यप्रामाण्यनिरूपणमेकमेवैतत्पादार्थ इति ब्रुवते। अत्र चत्वार्यधिकरणानि। तेष्वाद्यानि त्रीण्यर्थवादविषयाणि। तेष्वप्याद्यं यद्यपि नार्थवादानां विधिवत्स्वातन्त्र्येण फलविशेषसाधनरूपधर्मप्रमापकत्वं सम्भवति तथाऽपि विधिनासहैकवाक्यतया विधेयप्राशस्त्यज्ञानस्य प्रवृत्तिजननोपयुक्तस्य सम्पादकत्वेन तेषां प्रामाण्यं सम्भवत्येवेति निरूपयति। विधिवाक्येन सह पठितेषु केषुचिद्वाक्येषु स्वातन्त्र्येण फलविधित्वे सम्भवति इतरस्तवनद्वारा प्रामाण्यांगीकारो नोचित इति आक्षेपनिरसनप्रवृत्तं द्वितीयमधिकरणम्। एवं क्वचिन्न हेतुविधित्वशङ्काव्युदासाय तृतीयम्। अनन्तरमन्त्यं मन्त्राधिकरणम्। अत्र कर्मणामनुष्ठानसमयेऽनुष्ठातव्यपदार्थस्मरणार्थतयोच्चारणम्मन्त्राणामुपयोग इति निरूप्यते। अत्रत्येषु पूर्वपक्षसूत्रेषु ‘अविज्ञेया’दिति इदं ऋक्संहितां मनसि निधाय तदर्थस्याविज्ञायमानत्वान्मन्त्रस्याप्रा-

माण्यं प्रतिपादयति । तदिदं एतत्सूत्रकारकालेऽप्यद्यत्व इव अविज्ञातारम्भ एव सन् ऋक्संहिताविर्भावोऽत्यन्तं चिरन्तनत्वेन मनित इति ज्ञापयत् कदाचित् विमर्शकदृष्टिपतितमुच्चावचोत्प्रेक्षानिदानं भवेत् ।

अस्मिन्नप्यधिकरणे सूत्रकारोऽनित्यसंयोगमाशङ्क्य परिहरति । तत्राशङ्कासूत्रं 'अनित्यसंयोगान्मन्त्रानर्थक्य'मिति । अत्र भाष्यम् अनित्यसंयोगः खल्वपि भवेन्मन्त्रेष्वभिधानार्थेषु यथा किं कृण्वन्ति कीकटेषु गाव' इति । कीकटा नाम जनपदाः । नैचाशाखन्नाम नगरम् । प्रमगन्दो नाम राजेति । यद्यभिधानार्थाः प्राक् प्रमगन्दान्नायं मन्त्रोऽनुभूतपूर्व इति गम्यते' । परिहारसूत्रन्तु 'उक्तश्चानित्यसंयोग' इति । अथ भाष्यकारः परन्तु श्रुतिसामान्यमात्र' मिति शेषपूरणं विधाय व्यरंसीत् । कुमारिलस्तु लिखति यजमानस्तावत्प्रार्थयिता । इन्द्रश्च प्रार्थ्यमानः सर्वदाऽस्ति । कीकटा नाम यद्यपि जनपदास्तथाऽपि नित्याः । अथवा सर्वलोकस्थाः कृपणाः कीकटाः । प्रमगन्दः कुसीदवृत्तिः । स हि प्रभूततरमागमिष्यतीत्येवं ददाति । नीचाशाखः षण्डः तदीयन्धनम् । नैचाशाखम् । सर्वमयज्ञाङ्गभूतं तेषां कर्मण्यप्रवृत्तेः । तदस्माकमाहरेति ।

त्रीणि तावद्धर्मे प्रमाणानि वैदिकैर्गण्यन्ते । 'वेदोऽखिलो धर्ममूलम्' 'स्मृतिशीलेच तद्विदा' मिति । तत्राद्यपादद्वयेन त्रिविधस्य वेदस्य प्रामाण्यप्रकारे प्रदर्शिते स्मृत्याचारयोस्तत्प्रदर्शनाय तृतीयश्चरणः । तत्राधिकरणानि दश । तेष्वादिमे मूलभूतश्रुत्यनुमानद्वारा मन्वादिस्मृतीनां प्रामाण्यमभिदधे । अनन्तरे तासां प्रत्यक्षश्रुतिविरोधे दृष्टहेतुसम्भवेच प्रामाण्यमपोद्यते । इदन्द्वितीयमधिकरणं शाक्यादीनां

वेदविरुद्धत्वेन तत्स्मृतीनां न मानवादिवद्वेदानुमापकतया प्रामाण्यं सम्भवतीत्येतत्प्रतिपादनपरतयाऽपि कुमारिलो व्याचख्यौ । नत्वेतन्मन्तव्यं शाक्यमुनिरयमेतेन जैमिनेर्विदित इति । सूत्राणां सामान्यतः प्रवृत्ततया सम्भवमात्रेण कुमारिलेन तथा व्याख्यातम् । एवं व्याख्यानापरिदर्शनेनच शबरान्तानां व्याख्यातॄणामवैदिकमताविजृम्भणप्राक्कालिकत्वमप्यध्यवसातुमस्त्यवकाशः ।

सत्यपि विरोधे श्रुतिस्मृतिबोधितार्थयोः समबलत्व एव श्रुत्या स्मृतेर्बाधः । न तु यदा स्मृतिबोधितार्थः पदार्थत्वादिना प्रबलः श्रौतार्थस्तु पदार्थधर्मत्वादिना दुर्बलः तदाऽपीत्येवमर्थमनन्तरमधिकरणम् । वार्तिककारस्तु अत्रत्ययोर्द्वयोस्सूत्रयोराद्यं वैदिकाभिमतोऽहिंसादिरपि शाक्यादिनिबन्धनेभ्योऽवगम्यमानो न धर्मायेत्येतत्प्रतिपादनपरतया द्वितीयञ्च शिष्टाचाराणां प्रामाण्यस्थापनपरतया व्याचकार । अनन्तरं शब्दप्रयोगरूपाचारविषयकमधिकरणम् । यद्येकमेव पदमार्यैरेकत्रानार्यैश्चापरत्रार्थे प्रयुज्यते कीदृशोऽर्थस्तस्मात्पदादवगन्तव्य इति विशये आर्याभिमत एवार्थ इति निर्धारितमत्र । अन्यथाऽपि विचारद्वयमत्र वार्तिककारश्चकार । तत्र स्मृत्याचारयोर्विरोधे स्मृतिर्बलीयसीति, वैदिकपदस्य लोके वेदेच विभिन्नार्थकत्वे वैदिकार्थो गृहीतव्य इतिच क्रमेण सिद्धान्तितम् । आर्येषु कस्यचित्पदस्यार्थेऽप्रसिद्धेऽनार्याणामभिमतोऽर्थोऽपि ग्राह्य इति पञ्चमाधिकरणसिद्धांतः । स्मृत्याचारयोरेवं श्रुत्यनुमानद्वारा प्रामाण्यमुक्तम् । श्रुतिवत् कथं स्मृतीनामप्यपौरुषेयत्वं स्वातन्त्र्येण प्रामाण्यञ्च न सम्भवति इति शङ्कापरिहाराय दृढकर्तृस्मरणेन तत्पौरुषेयत्वसाधकं षष्ठम् । श्रुत्यनुमापकानां स्मृत्या-

चाराणां कर्तृदेशव्यवस्थावत्वेपि तदनुमितश्रुतिरविशेषेणैवानुमीय- इति समनन्तरे प्रतिपाद्यते । व्याकरणरूपस्मृतिविशेषप्रामाण्यमाक्षिप्याष्टमे समाधीयते । अत्र वाचकशब्दप्रसङ्गाद्वाच्यार्थनिर्धारणायान्त्यन्दशमाधिकरणं प्रवर्तते । तत्र लोकवेदयोर्यदि पदानि पदार्थाश्च भिन्नानि तदा वेदार्थविचारेऽस्मिन् पदार्थनिर्धारणमसङ्गतं स्यादिति लौकिकपदार्थाभेदं प्रतिपादयितुमुपान्त्यमधिकरणमन्त्यस्योपोद्घातभूतम् ।

अनया त्रिपाद्या धर्मे प्रमाणत्रयं शोधितम् । तत्र वेदे विधिवाक्यघटकानि पदानि त्रिविधानि भवन्ति । उद्देश्यस्य फलसाध्यापरपर्यायस्य, साधनस्य, साधनोपकारकस्य वा प्रतिपादकानीति । अनेवंविधन्तु नामधेयपदं तद्घटकम् । अस्य कथम्प्रामाण्यं कथं वा नामधेयत्वतदभावनिर्णय इतीदन्निर्धारणाय तुरीयपादारम्भः । अत्र विंशतिरधिकरणानि । आदिमे नामधेयपदस्यानुष्ठीयमानकर्मव्यवहारनिर्वर्तकतया प्रामाण्यमुच्यते । अनन्तरं क्रमेण चतुर्ष्वधिकरणेषु यथा विधित्सितगुणे तथा कर्मणि योगव्युत्पत्तिसम्भवः, वाक्यभेदप्रसङ्गः, विधित्सितगुणप्रापकशास्त्रान्तरसद्भावः, विधित्सितगुणस्योपमानतया कीर्तनमिति चत्वारि नामधेयत्वे निमित्तानि प्रतिपाद्यन्ते । एतेनाधिकरणचतुष्केणोक्त एवार्थः षष्ठे आक्षिप्य समाधीयते । एवमेतन्निमित्तसत्त्वेऽत्र नामत्वमित्यन्वयतो निरूपितस्यैव नामधेयत्वस्य दृढप्रत्ययायैतन्निमित्ताभावे न नामधेयत्वमिति व्यतिरेकतो निरूपणायानन्तरमधिकरणम् । कर्मनामधेयप्रसङ्गादुपस्थितानां कतिपयानां द्रव्यनामधेयानामर्थविचारोऽष्टमप्रभृतिषु त्रिष्वधिकरणेषु । तत्राष्टमे बार्हिराज्यशब्दौ नियमेन प्रतीयमानत्वात् कुशघृतजातिवाचिनाविति नवमे

प्रोक्षणीशब्दो योगव्युत्पत्त्या जले वर्तते नतु जात्येति दशमे निर्मन्थ्यशब्दोऽपि प्रोक्षणीवदिति प्रतिपाद्यते । निर्मन्थ्यशब्दस्य यौगिकत्वं प्रसाध्य तत्फलतया, यत्र निर्मन्थ्यशब्दः श्रूयते तत्र न केवलाग्निरुपादातव्यः अपितु मथित्वाऽग्निरुत्पादयितव्य इति कथिते तद्दृष्टान्तेन, क्वचिच्छ्रुतस्य वैश्वदेवशब्दस्य विश्वदेवदेवतारूपगुणप्रापकत्वं शङ्क्यमानं निराकृत्य कर्मनामत्वन्तस्यैकादशे स्थिरीकृतम् । अनन्तरे तु कर्मनामधेयत्वस्य गुणविधित्वस्य वाऽसंभवेऽर्थवादत्वमङ्गीकर्तव्यमित्युच्यते । अत्रोपस्थितानामर्थवादानां गौण्या वृत्त्या विधेयस्तावकत्वाच्चन्निमित्तभूतास्तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति षड्गुणास्त्रयोदशप्रभृतिषु षट्स्वधिकरणेषु कथ्यन्ते । प्रसक्तानामेवार्थवादानां स्तवनातिरिक्तं सन्दिग्धनिर्णायकत्वात्मकं कार्यान्तरमस्तीति तथा विधेरपि तथाविधं कार्यान्तरमस्तीति चान्त्येऽधिकरणद्वये निरूप्य पादस्सन्तिष्ठते सहाध्यायेन ।

इत्थं 'प्रथमेऽध्याये धर्मस्य प्रमाणन्निरूपितम् । प्रथमपादे चोदनायाः त्रिपाद्यांत्वर्थवादमन्त्रनामधेयस्मृत्याचाराणामिति । वाक्यशेषसामर्थ्ययोश्च सन्दिग्धार्थनिर्णये प्रामाण्यमुक्तम् । एवं समस्तेनाध्यायेन धर्मप्रमाणनिरूपणा' देव 'तत्प्रमेयस्य ज्योतिष्टोमाष्टकादेर्धर्मत्वावधारणात्' धर्मस्वरूपमपि निरूपितं भवति । 'वेदादिप्रमेयो धर्म इत्येतावत्यवबोधितेऽपि न कात्स्न्र्येन तत्स्वरूपमवगतं भवति । भेदलक्षणेनत्वियन्ति धर्मस्वरूपाणीत्यवधारणान्निरवशेषस्वरूपावगतिसिद्धिः'। अत इदानीं भेदाध्यायो द्वितीयः प्रवर्तते । 'सर्वञ्च भेदाभेदशेषशेषिभावादि प्रमाणबलेन निरूपणीयमिति प्रमाणलक्षणात्पश्चादारम्भः' ।

तत्र शब्दान्तरस्य भेदबोधकत्वं अभ्यासस्य तथात्वं-तदपवादेन क्वचिदभ्यासे सत्यप्यनुवादकत्वं. अनुवादकत्वापवादः, सङ्ख्यासंज्ञागुणैर्भेदः, सविस्तरं गुणस्यैव क्वचिद्भेदकत्वं क्वचिदतथात्वं, क्वचित्प्रयोगमात्रभेदकत्वमित्यादि, प्रकरणान्तराद्भेदस्तदपवाद इत्येतेंऽशाः द्वितीयतृतीयपादयोः स्थिताः । एतेषां भेदकप्रमाणानां भेदकत्वापवादश्चतुर्थपादार्थः । एवं कर्मभेदे सिद्धे तज्जन्यादृष्टभेदोऽपि सिध्यति । तदिदमदृष्टमङ्गीकर्तव्यन्नवा फलजनकमिदमदृष्टं किं क्रियात एव जायते उतान्यस्मादपीत्येतदादिकमुपोद्घाततया प्रथमपादे विचार्यते । प्रसक्तानुप्रसक्त्याच तत्र प्रधानाप्रधानकर्मणी मन्त्रब्राह्मणयोः ऋग्यजुस्साम्नाञ्च लक्षणानि वाक्यलक्षणमनुषङ्ग इत्येतदादिकमुक्तम् ।

अत्र डाक्टर् कोल्ब्रूक् लिखितवान्-"मन्त्रो ब्राह्मणमिति द्वौ भागौ वेदस्य । तत्र ब्राह्मणं मन्त्रभागपरिशिष्टमिति द्योतयन्--यद्यन्नमन्त्रस्तद्ब्राह्मणम्, 'शेषे ब्राह्मणशब्दः'--मन्त्रं लघु लक्षयितुं जैमिनिरुद्युक्तवान् । अनेकप्रकाराणि समानधर्मवन्ति वाक्यानि गणयन्प्राचीनो वृत्तिकारः जैमिनीयस्य हीनलक्षणस्याभ्युपगतां न्यूनतामपनेतुमयतिष्ट । तत्रैकैकोऽपि प्रकारोऽव्याप्तिमानित्यर्वाचीना व्याख्यातारः प्रदर्शितवन्तः । अन्तेत्वभ्युपगतं निष्कृष्टलक्षणं यत्राभियुक्तानां मन्त्रत्वप्रसिद्धिः स मन्त्रः यत्र ब्राह्मणत्वेन तद्ब्राह्मणमिति"[4] । अत्र किञ्चिदुच्यते :- प्रथमन्तावत्, 'शेषे ब्राह्मणशब्द इति सूत्रे शेषशब्दं पाश्चात्यविमर्शकोऽयमन्यथा जग्राह । न मन्त्रभागस्य ब्राह्मणभागः परिशिष्टभूतः (Suppliment) यथा स म-

न्यते । अत्र हि शेषशब्दो भिन्नवाची । भागद्वये एकस्य लक्षणेऽभिहिते इतरस्य तद्भिन्नत्वमेव लक्षणमिति सुग्रहोऽयं प्रकार इति सूत्रकृदभिप्रायः । न तत्र न्यूनता काचित्केनाप्यभ्युपगता । एतदाशयोऽत्र शाबरग्रन्थः -- अथ किंलक्षणं ब्राह्मणम् । मन्त्राश्च ब्राह्मणश्च वेदः । तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वाद्ब्राह्मणलक्षणमवचनीयम् । मन्त्रलक्षणवचनेनैव सिद्धं । यस्यैतल्लक्षणन्न भवति तद्ब्राह्मणमिति परिशेषसिद्धं ब्राह्मणम् । वृत्तिकारस्तु शिष्यहितार्थं परिगणितवान् -- इति ।

अत एव, ' शेष ब्राह्मणशब्द ' इति ब्राह्मणलक्षणं पश्यन्तो मन्यामहे एतत्सूत्रकृत्समये ब्राह्मणानि नवन्नवमुत्पद्यमानानि इयत्तयाऽनिश्चितान्यासन्निति विमर्शकानामभूमिरियमुत्प्रेक्षा । तच्चोदकेषु ब्राह्मणाख्या, शेषे मन्त्रशब्दः इत्यपि हि लक्षणं सम्भवत्येव । एकस्यैव तु प्रकारस्याश्रयणीयतया सूत्रकारस्तथा लक्षणं चकार । हिरण्यकेशी पुनः स्वीयश्रौतसूत्रारम्भे प्रकारान्तरमाश्रयति ' कर्मविधानं ब्राह्मणानि ' । ' तच्छेषोऽर्थवादः ' । ' अतोऽन्ये मन्त्रा ' इति । तदिदं विमर्शकाः स्वयं विमृशन्तु ।

' एवं सिद्धे भेदे ' शेषशेषिभावचिन्तनाय तृतीयाध्यायः प्रवर्तते । भिन्नानां ह्यङ्गाङ्गिभावस्सम्भवति नाभिन्नानामिति भेदाध्यायस्य हेतुत्वम् । तत्रेदं चिन्तनं बहुधा प्रवर्तते । ' कः शेष इति तत्स्वरूपं केन हेतुना शेष इति शेषशब्दप्रवृत्तिनिमित्तं ' श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि ' विनियोगे, शेषस्य शेषिणा सहान्वयबोधने, कारणानि प्रमाणानि, तेषाञ्च विरोधे बलाबलं,

विरोधश्च क्वाऽस्ति क्व नास्ती ' ति । तत्र शेषस्वरूपं शेषपदप्रवृत्तिनिमित्तं , प्रमाणेषु श्रुतिश्चेत्येते प्रथमपादविषयाः । लिङ्गरूपं प्रमाणं द्वितीयस्य । अनन्तरपादेत्वन्यानि चत्वारि प्रमाणानि , एषां विरोधे बलाबलञ्च निरूप्य विरोधसदसद्भावविचारोऽपि प्रक्रान्तः । अयमेव च विचारोऽध्यायसमाप्तिं यावदनुवर्तते । तत्रापि तुरीयं पञ्चमञ्चातिक्रम्य षष्ठस्य पादस्य षष्ठाधिकरणपर्यन्तं प्रकरणस्य तत्पूर्वप्रमाणैस्सह विरोधाविरोधचिन्तनम् । तदनन्तरन्तु प्रकरणानन्तरप्रमाणस्य स्थानस्य तत्पूर्वप्रमाणैः साकं विरोधचिन्तनं चतुर्भिरधिकरणैः । ततः परं प्रासङ्गिकी प्रकरणवाक्यविरोधाविरोधचिन्ता यावत्सप्तमपादसप्तमाधिकरणम् । अष्टमप्रभृति तु समाख्यायाः स्थानानन्तरप्रमाणभूतायाः पूर्वप्रमाणैर्विरोधाविरोधचिन्तनमध्यायशेषेण । अत्र कतिपयविचाराणामनेकपादव्यापित्वेऽपि श्रुतिः, लिङ्गं, वाक्यादिकं, प्रबलप्रमाणाबाधितप्रकरणविनियोगः, प्रतिपत्तिविचारः, अनारभ्यवादाः, अनेकोपकारकतयोपदिष्टाः पदार्थाः, यजमानधर्मा इति क्रमेणाष्टानां पादानामर्थाः ।

सिद्धेऽङ्गाङ्गिभावे किमङ्गि कस्याङ्गस्य प्रयोजकमनुष्ठापकमिति विमृश्य निर्धारयितुं चतुर्थाध्यायारम्भः । तत्र यत् साक्षात् फलं जनयति, यथा यागादि, तत्र फलं प्रयोजकम् । तथा यागसाधने यागः तत्साधने साधनमित्युत्सर्गः । न तु पुनः क्वचिदङ्गार्थं प्रधानानुष्ठानम् । अङ्गिनोऽपि, यदि स्वेतरार्थमुत्पन्नस्यैवाङ्गस्य पुनः स्वार्थं विनियोगः तदा स्वेतरप्रयुक्ताङ्गोपजीवनान्न तादृशाङ्गप्रयोजकत्वमिति चतुर्थाध्यायसारः । एतादृशप्रयोजकत्वाप्रयोजकत्वनिर्धारणार्थमेवाङ्गा

ङ्गिभावादिकमपि चिन्त्यते। तदिदमाक्षेपसमाधानाभ्यां स्वयमाह पार्थसारथिमिश्रः । 'यदि प्रयोजकत्वाप्रयोजकत्वचिन्ता चतुर्थे कथन्तर्हि क्रत्वर्थपुरुषार्थयज्ञाङ्गत्वायज्ञाङ्गत्वा पूर्वसदसद्भावनियमविधित्युत्पादनफलविध्यर्थवादत्वफलवत्त्वकालार्थत्वाङ्गप्रधानार्थत्वसमप्रधानत्वगुणप्रधानत्वादीनि चिन्त्यन्ते ? प्रयोजकाप्रयोजकसिद्ध्यर्थमेव तत् । तथाहि—....' इत्यादि । प्रधानस्य प्रयोजकत्वं, अप्रधानस्य तथात्वम्, फलस्य तत्वं, एतदपवाद इति चतुर्णां पादानामर्थाः ।

प्रयोज्येषु निर्णीतेषु किं पूर्वं प्रयुज्यते किमनन्तरमिति प्रयोज्यगतस्य पौर्वापर्यरूपस्य क्रमस्य विवेचनं पञ्चमे क्रियते । तत्र श्रुतिः क्रमबोधकः शब्दः, अर्थः प्रयोजनम्, पाठक्रमः विधायकवाक्यानां वाऽङ्गभूतमन्त्राणां वा, स्थानं पूर्वपदार्थोपस्थितिः, मुख्यक्रमः अङ्गिनां क्रमः, प्रवृत्तिक्रमः प्रथमपदार्थस्य बहुष्वङ्गिषु येन क्रमेण करणं स उत्तरपदार्थकरणे क्रमनियामक इति षट् क्रमप्रमाणानि सह काचित्कविरोधविचारेण प्रथमपादे निरूप्यन्ते । अनेकप्रधानेषु समानांगसमुदायवत्स्वेकस्मिन्प्रधाने सर्वाण्यङ्गान्यनुष्ठाय पुनरन्यस्मिंस्तानि क्वचिदनुष्ठीयन्ते । एवमनुष्ठानं काण्डानुसमय इति कथ्यते । क्वचित्पुनरेकमेवाङ्गमनेकेषु प्रधानेषु कृत्वा पश्चात् द्वितीयमङ्गं सर्वेषां क्रियते । एवमुत्तरोत्तराण्यङ्गानि । सोऽयं पदार्थानुसमयः । एतयोः काण्डानुसमयपदार्थानुसमययोः कतरः कुत्रेति द्वितीयपादप्रतिपाद्योऽर्थः। अनेन पादद्वयेन बहूनां पदार्थानां क्रमश्चिन्तितः । एकस्यैव तु पदार्थस्याभ्यासे आवश्यके तत्पौर्वापर्यचिन्तनं तृतीयपादस्यार्थः । चतुर्थस्य पुनः क्रमप्रमाणानामेकत्र समवाये बलाबलम् ।

अथ षष्ठोऽध्यायः । 'भेदादिलक्षणैरेवमनुष्ठेये निरूपिते, कोऽनेनाधिक्रियेतेति साम्प्रतं सम्प्रधार्यते' । 'निरुपितेह्यनुष्ठेये शक्यं शक्तिनिरूपणम् , तस्यान्निरूपितायान्तु तदधीनाऽधिकारधीः । नह्यनवगतेऽनुष्ठेये तच्छक्तिरवगन्तुं शक्या । तयाचाधिकारनिरूपणमिति भवत्यनुष्ठेयप्रतिपादकस्याध्यायपंचकस्याधिकारविचारहेतुत्वम् । नचैकस्यैवाध्यायस्य हेतुत्वम् । तत्सङ्घातस्याप्येककार्यप्रतिपादकस्य पूर्वषट्कस्येवोत्तरषट्कं प्रति तदुपपत्तेः । एकस्याप्यध्यायस्य नानानयसङ्घातात्मकस्यैककार्योपधानादेवैकत्वम् । तदध्यायपंचकस्याप्यनुष्ठेयप्रतिपादनादैक्यमापादितस्याधिकारहेतुत्वमुपपन्नम्' । अत्राष्टसु पादेषु क्रमशोऽधिकारी, तद्विशेषणं , क्वचित्सर्वपदार्थकरणशक्तस्याधिकारः क्वचिदशक्तस्यापीति शक्तेरधिकारिविशेषणत्वतदभावौ, द्रव्यनाशादिनिमित्तकप्रायश्चित्ताधिकारः, कालाद्यपराधनिमित्तकप्रायश्चित्ताधिकारः, विकृतिविशेषाधिकारः, दक्षिणाविवेचनम् , अनाहिताग्न्यधिकार इतीमे विषया निरूप्यन्ते । अत्र त्रैवर्णिकातिरिक्तस्य रथकाराभिधानभाजो जातिविशेषस्य क्वचिद्वैदिककर्मण्यधिकारमापस्तम्बानभिमतमपि जैमिनिः साधयति । एवं निषादस्यापि । तथा प्रतिपादने स हेतुं निर्दिशति 'शब्दसामर्थ्या' दिति । तदिदमालोचयतां हि भाति वेदमेकं प्रमाणीकृत्य न्यायालोकपरिष्कृतेन तदनुमतेन पथा सञ्चरमाणस्य सूत्रकृतो हृदयं न जात्यभिमानेन , न समुदाचारनिर्बन्धेन , न नीचेषु जुगुप्साभरेण , न वाऽन्येन केनचिद्धारालहृदयोचितेनाशयेनाक्रान्तमाघ्रातमात्रमपि वा बभूवेति । यदा यदाऽसौ न्यायविशेषानुपन्यस्य सिद्धान्तमाभिमतं स्थिरीकरोति, तदातदा

सति सम्भवे ' लिङ्गदर्शनादि ' त्यसकृदभिदधानः स्वाभिमतस्यार्थस्य श्रुत्यनुमतत्वं प्रदर्शयति । एवं प्रमाणमनुसरन्त एवान्येऽपि कर्मविशेषे जातिविशेषस्याधिकारं निषेधन्ति न लोभादिनेति काच्चिदिदमनुत्तानं प्रसरन्त्या दृशा कश्चिद्विमर्शक इदानीं विमृशेत् ? त्रैवर्णिकानामपि मध्ये पंग्वन्धबधिरमूकानामवयववैकल्येन साङ्गं क्रतुमनुष्ठातुमशक्तत्वादनधिकारमत्र जैमिनिराह । स्त्रीणां पुनः पुरुषाणामिव विद्याया अभावेनानधिकारं पूर्वपक्षीकृत्य, 'पत्युर्नो यज्ञसंयोगे ' 'धर्मे चार्थेच कामेच नातिचरितव्या ' ' सहत्वं च पुण्यफलेषु ' इत्यादिप्रमाणान्यनुसरन् सूत्रकारः सर्वथाऽधिकारोऽस्तीति सिद्धान्तयति । एवमत्र प्रथमपादे कस्मिंश्चिदधिकरणे सिद्धान्तयित्वाऽनन्तराधिकरणे दम्पत्योः सहैवाधिकारो न पृथगित्यपि समर्थयति ।

एवमौपदेशिकाङ्गसम्बन्धप्रकारे सप्रमाणे पूर्वाध्यायषट्केन प्रदर्शितेऽनन्तरमातिदेशिकाङ्गसम्बन्धविधा सप्रमाणा उत्तरषट्केन प्रतिपाद्यते । तत्राङ्गानां यस्य कर्मणस्समीपे विधानं तस्मात्कर्मणोऽङ्गविशेषरहितेषु कर्मसु प्रापणं सप्रमाणं सह तत्र तत्रावश्यकैरन्यथाभावविशेषैस्सप्तमादिषु चिन्त्यते । तत्र सप्तमेऽतिदेशप्रमाणानि प्रत्यक्षवचनं नामधेयं कल्पितवचनमिति त्रीणि क्रमेण प्रथमतृतीयचतुर्थेषु विवेचितानि । द्वितीये तु प्रत्यक्षवचनेनातिदिश्यमानस्य सामपदार्थस्य निर्धारणम् ।

सप्तमान्तोक्तस्य कल्पितवचनातिदेशस्य विशेषचिन्तनार्थमेवाष्टमारम्भः । तत्र स्पष्टं प्रतीयमानेन सादृश्यविशेषेण अस्मिन् कर्मण्यस्मात्कर्मणोऽङ्गान्यानीयन्ते नान्यस्मादिति निर्धारणं प्रथमपादा-

र्थः । यागस्त्रिविधः इष्टिः पशुस्सोम इति । धान्यविशेषसाध्यो याग इष्टिः । प्राणिसाध्यः पशुः । सोमलतासाध्यः सोमः । एषां मध्येऽङ्गविशेषरहितानामिष्टीनां दर्शपूर्णमासयागतः, पशुयागानां दैक्ष इति व्यपदिश्यमानादग्नीषोमीयपशुयागात् सोमानां ज्योतिष्टोमयागाच्चाङ्गान्यतिदिश्यन्ते । सोमयागोऽप्यनेकविधः । एकेनाह्ना साध्यः, अहस्समुदायेन, संवत्सरेण, संवत्सरैर्वेति । तेष्वेकदिनकर्तव्या एकाहा इति, दिनद्वयप्रभृत्येकादशदिनपर्यन्तकर्तव्या अहीना इति, त्रयोदशप्रभृति शतपर्यन्तदिनकर्तव्यास्सत्राणीति, द्वादशदिनकर्तव्योऽहीन इत्यपि सत्रमित्यपि, संवत्सरसाध्या अयनानीतिच सत्राणीतिच कथ्यन्ते । एषु ज्योतिष्टोमादेकाहानां द्वादशाहस्यच, द्वादशाहादहीनानां सत्राणाञ्च, गवामयनात्तदितरसंवत्सरसत्राणाञ्च धर्मातिदेशः । अत्रैकाहभिन्नानां बहवो यजमानाः । तत्राप्यहीनेष्वैच्छिकी अनियता संख्या । सत्रेषु पुनः सप्तदशावराश्चतुर्विंशतिपरमा यजमाना इति विशेषः ।

अस्पष्टसादृश्यविशेषविचारपुरस्सरं प्रकृतिविकृतिभावनिर्धारणं द्वितीयपादे क्रियते । यतोऽङ्गान्यन्यत्र गच्छन्ति सा प्रकृतिः । यत्र गच्छन्ति सा विकृतिः । अनेकविधे सादृश्ये कीदृशं सादृश्यमादर्तव्यमिति तत्प्राबल्यविमर्शेन प्रकृतिनियमचिन्तनं तृतीयचरणे । अतिदेशापवादो होमेषु चतुर्थ इति ।

अतिदेशेऽवगते तदनन्तरं विकृतिष्वतिदेशेन प्राप्तानां मन्त्रसामसंस्काररूपाणां पदार्थानां द्वारान्तरसम्बन्धनिमित्तोऽन्यथाभावात्मक ऊहो नवमाध्यायेन चिन्त्यते । प्रकृत्यूहप्रत्ययोहादिभेदेन म-

न्त्रोहो बहुविधः । तत्र प्रकृत्यूहस्संस्कारोहश्च प्रथमपादस्य, सामोहो द्वितीयस्य, मन्त्रे वचनोहस्तृतीयस्य, येषाम्मन्त्राणामवान्तरकार्यं सन्दिग्धं तादृशमन्त्रोहश्चान्त्यस्य प्रतिपाद्यः ।

'ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया, इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते । अतिदिष्टपदार्थविषयत्वाद् बाधस्योहवदतिदेशोत्तरकालमारम्भः ।' यद्यपि नोहबाधयोरन्योन्यं हेतुहेतुमद्भावः 'यत्र हि द्रव्यान्तरे देवतान्तरे वा प्राकृतं प्रयोजनमस्ति तद्विषय ऊहः । यत्र तु नास्ति तत्र बाधः । तथाप्यूहस्य पदार्थगतरूपान्तरात्मकत्वेन' पदार्थप्रत्यासन्नत्वात्पदार्थप्रापकातिदेशानन्तरं तच्चिन्ता कृता । 'बाधस्तु तन्निवृत्यात्मकः पश्चाच्चिन्त्यते' । सोयं बाधस्त्रेधा भवति । अपेक्षितपदार्थसमर्पणप्रवृत्तो ह्यतिदेशः प्रकृतौ येनाङ्गेन यादृशं प्रयोजनमाहितं विकृत्या तादृशमेव प्रयोजनमात्मनः सम्पादयितुन्तस्मिन्नङ्गेऽपेक्षिते तदङ्गं तत्र प्रापयति । यदितु विकृतौ तादृशप्रयोजनन्नास्ति तदा विकृतिर्न तज्जनकमङ्गमाकाङ्क्षति । अतिदेशश्चानपेक्षितमङ्गन्न प्रापयति । सोऽयमर्थलोपात्, प्रयोजनलोपात् एको बाधः । तथा विकृतौ प्रकृतिदृष्टप्रयोजनवत्यां तादृशप्रयोजनसम्पादकमङ्गान्तरं यदि तत्र विहितं तदा तेनैवौपदेशिकेनाङ्गेन तस्मिन्प्रयोजने निष्पन्ने न सा विकृतिः प्रकृतितस्तज्जनकमङ्गमपेक्षत इत्यतिदेशोऽपि तत्प्रापणे औदासीन्यं भजते । अयन्तु प्रत्याम्नानाद्बाध इति भण्यते । क्वचित्तु प्राकृतानां पदार्थानां विकृतिषु प्रत्यक्षं प्रतिषेधः परिदृश्यते । एवं प्रतिषिद्धाः पदार्था अप्यतिदेशेन न प्राप्नुवन्तीति प्रतिषेधाद् बाधोऽयमिति । तत्र सप्तमपादार्धपर्यन्तं अर्थलो-

पाद् बाधो विचार्यते । तत्राप्यर्थलोपकृतो बाध एव साक्षात्प्रथमे, अस्यैवोदाहरणबाहुल्येन विस्तरो द्वितीये, बाधापवादस्तृतीये, प्राकृतानां वैकृताङ्गैस्सह समुच्चयश्चतुर्थे, ज्योतिष्टोमयागसम्बन्धिग्रहविषयकः पदार्थैकदेशबाधः पञ्चमे, सामविषयकोऽनन्तरे, ज्योतिष्टोमाङ्गभूतपशुयागानुबन्धी तदनन्तरे च प्रतिपाद्यते । सप्तमान्ते प्रत्याम्नानाद्बाध उक्तः । अष्टमेच प्रतिषेधादिति ।

सप्तमे उपक्रांतोऽयमतिदेशविचारो दशमेऽवसितः । तत्र दशमे, अत्र विकृतावेतान्यङ्गानि न प्राप्यन्त इति केषाञ्चिदङ्गानां बाधविचारद्वारा, अत्रैतावन्त्यङ्गानि कर्तव्यानीत्यङ्गपरिमाणमपि निरूपितं भवति । तदनन्तरन्तत्प्रसङ्गादेव समानाङ्गापेक्षिषु बहुषु प्रधानेषु युगपदनुष्ठीयमानेष्वेकैकस्य प्रधानस्य कृते एकैकमङ्गमावर्तनीयं नवेत्यनुष्ठानापरपर्यायप्रयोगपरिमाणनिरूपणाय प्रवृत्तिः । प्रयोगपरिमाणचिन्ताया अविशेषेऽपि तन्त्रनिरूपणायैकादशोऽध्यायः प्रसङ्गनिरूपणाय द्वादश इत्यध्यायभेदः । तन्त्रप्रसङ्गविवेकं भाष्यकारः करोति । ‘ तत्र यत् सकृत् कृतं बहूनामुपकरोति तत् तन्त्रमित्युच्यते । यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः । यस्तु आवृत्या उपकरोति स आवापः । यथा तेषामेव ब्राह्मणानामनुलेपनम् ’ । अयं तन्त्रविवेकः । प्रसङ्गं प्रतित्वाह—‘ अन्यत्र कृतस्याप्यन्यत्रासाक्तिः प्रसङ्गः । यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम् । ’ इति ।

तत्र प्रधानानां युगपदनुष्ठानप्रसक्तौ सत्यामेव तदङ्गप्रकरस्य तन्त्रप-

तित्वम् , अङ्गानां तन्त्रं क्वचित् क्वचिदावृत्तिरिति द्वयमिदम् , तन्त्रस्यैवोदाहरणबाहुल्येन विस्तारः , तथाऽऽवृत्तिविस्तार इति क्रमेणैकादशाध्यायस्य पादार्थाः । तथा प्रसङ्गः , कस्य प्रधानस्योद्देशेनानुष्ठितानां कुत्र प्रसङ्ग इति प्रसज्यमानाङ्गानुष्ठानोद्देश्यरूपतन्त्रिनिर्णयः , प्रसङ्गापवादतया समुच्चयः , विकल्प इत्यमी चत्वारो द्वादशाध्यायपादार्थाः ।

एवं स्थूलमवगतद्वादशाध्यायार्थाः प्रकृते इतोऽपि सूक्ष्मं परिशीलयितुमलब्धावसरा अधिकारामिममत्रावस्थाप्य मीमांसकसम्मतप्रमाणप्रमेयसमाचारं प्रति सम्प्रति निवर्तेमहि ।

---



॥ श्रीः ॥

# अथ प्रमाणप्रमेयाधिकारः पञ्चमः ।

तत्र यथा प्रमाणानां विशिष्य विचाराय न्यायशास्त्रस्य, प्रमेयानां तथा विचाराय च वैशेषिकशास्त्रस्यैदम्पर्येण प्रवृत्तिरिति तयोरेतद्विचारो विशिष्य विषयीभूतः न तथाऽयं शास्त्रान्तरस्य कस्यचिद्विषयीभवति । तथाऽपि यस्य शास्त्रस्य यः प्रधानविषयस्तमनपायं स्थापयितुं तत्तच्छास्त्रविदः, यत्र शास्त्रान्तरविरोधः प्रसज्यते तत्रान्यादृशमेव पन्थानं स्वकीयं कमपि नवीनमाकलयन्तः शास्त्रान्तरकारानभियोक्तुं सन्नह्यन्ति । तस्मात् शास्त्रकार एकैकोऽपि प्रमाणप्रमेयव्यवस्थापनकृते इतरैस्साकं सङ्ग्रामभूमिं बलान्नीयते । ततस्तु वेदार्थविचारैकोद्देशेन दीक्षितवतामपि मीमांसकानां प्रमाणप्रमेयपर्यालोचनमप्यावश्यकमापद्यत ।

तत्र प्रमाणेषु प्रत्यक्षानुमानशब्दानां प्रामाण्यं स्वयं कण्ठरवेण जैमिनिरावेदयति । तथा सूत्रेषु प्रमेयविशेषाङ्गीकारसूचनं काचित्कम् । भाष्यकारस्तु प्रथमपादे वृत्तिकारमतनिरूपणमिषेण षट् प्रमाणानि तदुपयोगितयाऽऽत्मज्ञानादिकतिपयप्रमेयविचारञ्च प्रास्तावीत् । एष एव तु समाचारो वहुलीकृतः श्लोकवार्तिके कुमारिलेन । ततोऽपि लघुतरं यथाऽवगमः स्यात्तथा प्रमाणप्रमेयतत्वप्रतिपादनाय श्लोकवार्तिकव्याख्याने न्यायरत्नाकरे, शास्त्रदीपिकाप्रथमपादे च पार्थसारथिमिश्रेण यतितम् । इत्येतावन्ति मीमांसकसम्मतप्रमाणप्रमेयपरिज्ञानोपयुक्तानि प्राचीनानि निबन्धनानि । नवीनः पुनर्भाट्टचिन्तामणिरेतद्विषयसमधिगमे साहाय्यसमर्पणक्षमः यस्य रचयिता, मीमांसकेषु विद्यमानमैतिह्यं बोधयति नः, खण्डदेवस्याचार्यो बभूव । परन्त्वयं गङ्गेशो-

पाध्यायरघुनाथशिरोमणिप्रभृतीनामर्वाचीनानां न्यायप्रक्रियापरिचिन्तनेनाहितान्याहशसंस्कारः प्राचीनमीमांसकाङ्गीकृतपदार्थस्थापने प्रशिथिलादर इव दृश्यते । एवमप्यसौ वाङ्मात्रेण तान् नैयायिकान् तत्र तत्रापमानयन् कीर्तयति । विहायामुं भाट्टचिन्तामणिमस्त्यपरोऽपि मानमेयोदयो नाम तान्त्रिकप्रमाणप्रमेयविवेचकानामवश्यसमालोचनीयो ग्रन्थः । अत्र द्वौ परिच्छेदौ । एकः प्रमाणमधिकृत्य, अपरः प्रमेयम् । तत्र प्रमाणपरिच्छेदः केरळाभिजनेन नारायणभट्टेन, प्रमेयपरिच्छेदोऽन्येन नारायणपण्डितेन च प्रणीतः । मन्ये सत्यमाह तत्पुस्तकभूमिकाकारः 'मीमांसकसम्मतानां पदार्थानां सुखतरं व्युत्पादको ग्रन्थोऽतिविरळ एव' । तानिमान् ग्रन्थान् समालोच्य तन्त्रसमयानुरोधेन मानमेयवृत्तमद्य संगृह्य प्रतिपाद्यते ।

मीमांसकैरङ्गीकृतानि षट् प्रमाणानि—प्रत्यक्षमनुमानं शब्दः उपमानमर्थापत्तिरनुपलब्धिरिति । तत्र पदार्थैस्साक्षादिन्द्रियाणां सन्निकर्षे सति जायमानं ज्ञानं प्रत्यक्षमिति परेषामिवामीषामपि सम्मतम् । तथा प्रत्यक्षज्ञानकरणभूतानि चक्षुरादीनि मनोन्तानि षडिन्द्रियाणीत्यपि । इन्द्रियार्थसन्निकर्षविषये तु नैयायिकाभिमतेषु संयोगस्संयुक्तसमवायस्संयुक्तसमवेतसमवायः समवायस्समवेतसमवायो विशेषणविशेष्यभाव इति षट्सु प्राथमिकांस्त्रीनेव समवायस्थाने तादात्म्यमिति व्यवहरन्तो मीमांसका अङ्गीकुर्वन्ति । समवायस्त्वाकाशात्मकेन श्रोत्रेन्द्रियेणाकाशगुणस्य शब्दस्य ग्रहणे सन्निकर्षतया न्यायवेदिभिरङ्गीकृतः । मीमांसकमते तु श्रोत्रस्य दिगात्मकत्वात्, शब्दस्य च द्रव्यत्वेन संयोगरूपसन्निकर्षस्यैव सम्भवाच्च न तदङ्गीकारस्यावश्य-

कता । तथा शब्दवृत्तिसामान्यस्य संयुक्तातादात्म्येनैव ग्रहणसम्भवेन न समवेतसमवायोऽपि मीमांसकैरङ्गीक्रियते । एवमभावपदार्थस्यानुपलब्धिरूपप्रमाणान्तरगोचरस्य प्रत्यक्षज्ञानाभावेन तत्कृते सन्निकर्षोऽनपेक्षित इति विशेषणविशेष्यभावरूपः सन्निकर्षोऽप्येतन्मते नाभ्युपगम्यते । एवं षडिन्द्रियात्मकं त्रिसन्निकर्षमेतन्मते प्रत्यक्षप्रमाणम् । द्रव्यगुणकर्मवृत्तिषु द्रव्यत्वगुणत्वकर्मत्वसामान्येषु सत्तारूपं सामान्यान्तरमङ्गीकुर्वन्तः पुनरेके इन्द्रियेण तद्ग्रहणहेतोः संयुक्ततादात्म्यवत्तादात्म्यवत्तादात्म्यमपि चतुर्थं सन्निकर्षमभिलष्यन्ति ।

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदेन द्वैविध्यमत्राप्यभ्युपेयते । पुनस्तु सविकल्पकं प्रत्यक्षं लौकिकमलौकिकमिति द्वेधा विभज्य लौकिकप्रत्यक्षे पूर्वोदाहृतास्सन्निकर्षाः , अलौकिकप्रत्यक्षेतु समानधर्मरूपो ज्ञानरूपो योगजधर्मरूप इति त्रयस्सन्निकर्षा इति नैयायिका मन्यन्ते । तत्रानुमानहेतुभूतव्याप्त्यवगमसमये महानसवृत्तौ धूम एव तादृशव्याप्तेर्गृहीतत्वात् कालान्तरे पर्वतवृत्तिधूमव्यक्त्यन्तरेणानुमितिर्नोपपद्यते । तस्यां व्यक्तौ पूर्वं वह्निव्याप्तेरनवगतत्वादिति सङ्कटमिदं परिजिहीर्षवो महानसे यदा एकस्या धूमव्यक्तेः प्रत्यक्षन्तदा कालान्तरदेशान्तरवृत्तीनां सर्वासामेव धूमव्यक्तीनां प्रत्यक्षं सञ्जायते । तासुच तदानीमेव वह्निव्याप्तिरपि गृहीता भवतीति ते कल्पयंति । तत्रानुमितेरपि प्रत्यक्षात्मकत्ववारणाय साक्षादिन्द्रियसान्निकर्षवन्तं पदार्थं विषयीकृत्य जायमानं ज्ञानमेव प्रत्यक्षमिति सर्वेषान्दार्शनिकानां नियमः । सत्येवं महानसवृत्तिधूमप्रत्यक्षे यथा स-

न्निकर्षेण भवितव्यम् । एतत्कृते सामान्यलक्षणस्सन्निकर्षः कल्प्यते। इन्द्रियेण साक्षात्सम्बद्धो धूमः । तद्वृत्ति धूमत्वं सामान्यम् । एतच्च देशान्तरकालान्तरवृत्तिसर्वधूमव्यक्तिषु वर्तत इति एतादृशसामान्यद्वारा तादृशधूमान्तरव्यक्तीनामपि सन्निकर्षवत्त्वान्महानसधूमप्रत्यक्षकाले संयोगरूपसन्निकर्षेण तस्यैव तादृशसामान्यरूपसन्निकर्षेणान्येषामपि धूमानां प्रत्यक्षविषयत्वमुपपद्यत इति। एवञ्चक्षुस्सन्निकृष्टे चंदनखण्डे सुरभि चन्दनमिति प्रत्यक्षं जायते । तत्र संयोगरूपसन्निकर्षेण पार्थिवद्रव्यस्य चन्दनस्य प्रत्यक्षविषयत्वे उपपद्यमाने चक्षुरिन्द्रियाग्राह्यस्य सौरभस्य तन्नोपपद्यते। अतो द्रव्यग्रहणकाले यथाकथमप्युपस्थितस्य सौरभस्य साक्षाच्चक्षुस्सन्निकृष्टचन्दनप्रत्यक्षे भानमङ्गीकर्तव्यम् । विनाच सन्निकर्षमेतदयोगात् क्लृप्तसन्निकर्षेष्वन्यतमस्याप्यसंभवाच्च तदुपस्थितिरेव तत्र संनिकर्ष इति ज्ञानरूपोऽयमावश्यकस्सन्निकर्षः । तथा चक्षुरादीन्द्रियपथमतिलङ्घ्य वर्तमानेऽपि वस्तुनि योगिनां प्रत्यक्षोदयात्तन्निर्वाहाय योगजधर्मोऽपि संनिकर्ष इति न्यायविदामाशयः ।

तादिदमलौकिकप्रत्यक्षमप्रामाणिकमिति मीमांसाभिज्ञा मन्यन्ते। अयन्तु तेषामभिसन्धिः—यत्र यस्या व्यक्तेरनुमितिस्तत्र व्याप्तिसम्पत्तये तया व्यक्त्याऽनुभूतपूर्वया भवितव्यमिति न निर्बन्धः , येन तदनुरोधेन यत्र यत्र धूमस्तत्र तत्र वह्निरिति , योयो धूमवान् ससोऽग्निमानिति वाऽनुमानोपयुक्ताया व्याप्तेः स्वरूपमभ्युपयन्तस्तादृशव्याप्तिग्रहणाय सामान्यलक्षणां प्रत्यासत्तिमनुमन्येमहि । अपितु यज्जातीयेनानुमानं तज्जातीयस्य यत्र यत्र धर्मिणि दर्शनं तत्र तत्र नि-

यतं लौकिकप्रत्यक्षगम्यं साध्यसजातीयसामानाधिकरण्यं व्याप्तिः । इयमेव चानुमानोपयोगिनी । इयञ्च यस्य यावन्ति सम्भवन्ति तस्य तावद्भिर्भूयोभिर्दर्शनैर्लौकिकप्रत्यक्षात्मकैरेव , दृष्टेषु धर्मिषु व्यभिचारादर्शनसहकृतैरवगम्यत इति न कार्यं सामान्यलक्षणप्रत्यासत्त्या । एवं प्राक्तनसौरभानुभवजनितसंस्कारसचिवेनेन्द्रियसन्निकर्षेण सुरभि चन्दनमिति प्रत्यक्षे उपपद्यमाने न तत्र सन्निकर्षान्तरस्वीकारावश्यकता । तत्र सौरभांशे स्मृतित्वमितरांशे चाक्षुषानुभवत्वमिति परं विशेषः । प्रत्यभिज्ञायां ह्ययमंशस्सर्वाभ्युपगतः । यथाऽप्रमास्वप्यंशतः प्रमात्वं , संशयेष्वंशतो निश्चयत्वं तथाऽत्राप्यंशभेदेन विरुद्धधर्मसमावेशे न किमपि हीयत इति । तथा यदुच्यते योगिनामसन्निकृष्टप्रत्यक्षमिति तत्र तादृशयोगिनामप्रसिद्धिरिति केचिदूचुः । अन्ये पुनरनुभूतस्यैव योगिनां निरन्तरचिन्तनात्मकभावनयोपस्थितिं नत्वननुभूतस्येति योगिनां भावनाबलेन जायमानं ज्ञानं स्मृतिरेव नतु प्रत्यक्षमिति तत्र सन्निकर्षाय प्रयत्नो मुधेत्यभिसन्दधिरे ।

भाट्टचिन्तामणिकारस्तु गागाभट्टोऽत्राद्यसन्निकर्षद्वयजन्यमलौकिकप्रत्यक्षमङ्गीकरोति । तत्र ज्ञानलक्षणाङ्गीकारे युक्तिमाह तदनङ्गीकारे एकत्र घटव्यक्तौ घटपदस्य शक्त्यवगमे तस्मात्पदात् घटान्तरबोधो न स्यादिति । अत्र पदानां जातौ शक्तिरिति मीमांसकमतं किमसौ व्यस्मार्षीत् ? अथवा मीमांसकमतानुरोधेनापीयमापत्तिस्सम्भवतीति चिन्तनीयम् ।

अथानुमानं प्रति । नैयायिकाः अन्वयव्यतिरेकि, केवलान्वयि केवलव्यतिरेकीति त्रेधाऽनुमानं विभजन्ते । तत्र केवलव्यतिरेक्यनुमानं

मीमांसकानामनभिमतम् । अत्र हि प्रकृतपक्षादन्यत्राप्रसिद्धस्यैव पदार्थस्य साध्यत्वं वक्तव्यम् । एतस्मिंश्चानुज्ञायमानेऽदृष्टाद्यलौकिकार्थानामप्यनुमानविषयत्वं प्रसज्येतेति बिभ्यतस्तान्त्रिकास्तन्निरसने प्रयस्यन्ति ।

परार्थानुमाने न्याये पञ्चस्ववयवेषु त्रयाणामेवावश्यकतामेते पश्यन्ति । प्रतिज्ञाहेतूदाहरणानां वा, उदाहरणोपनयनिगमनानां वेति । प्रतिज्ञानिगमनयोर्हेतूपनययोश्चैकेनान्यतरस्य चरितार्थतया समुच्चित्योभयोरेकत्रोपादाने पुनरुक्तिप्रसङ्ग इत्येतेऽभिप्रयन्ति ।

तथा हेतुदोषा अपि त्रय एवात्र सम्मताः । असिद्धोऽनैकान्तिको बाधकश्च विरुद्धापरपर्याय इति । बाधितविषयत्वन्तु प्रतिज्ञादोषः पक्षदोषो वा । नतु हेतुदोषः । यद्यपि कथञ्चिद्धेतुदोषत्वमप्युपपादयितुं शक्यते तथाऽपि प्रतिज्ञोच्चारणानन्तरमेव हेतुनिर्देशात्प्रतिज्ञानिर्देशसमय एव बाधस्य स्फुरणसम्भवेन प्रतिज्ञादोषत्वमेव युक्तम् । नतु तदुपजीव्य पश्चादवगम्यमानं हेतुदोषत्वमिति। सत्प्रतिपक्षितत्वन्त्वनैकान्तिकान्तर्भूतम् । अनैकान्तिकस्य साध्यसंशयजनकतया दूषकता। तत्र यथा साधारणेन साध्यसंशयो जायते तथा साध्यतदभावव्याप्यहेतुद्वयोपन्यासेऽपि । अत एवानैकान्तिको द्वेधा सव्यभिचारस्सप्रतिसाधनश्च । यत्तु नैयायिकास्साधारणासाधारणानुपसंहारिभेदेनानैकान्तिकं त्रेधा भिन्नमभिदधति तत्र साधारण एव केवलं सव्यभिचारपदाभिधानार्हः अनैकान्तिकान्तर्भूतः । असाधारणस्त्वसिद्धविशेष एव । यथेदं तथोच्यते । हेतुस्वरूपस्य, पक्षे हेतुसम्बन्धस्य, पक्षैकदेशे तत्सम्बन्धस्य, पक्षव्यतिरेकेण पक्षादन्यत्र तत्सम्ब-

न्धस्य, पक्षस्यैव वा, असिद्धाऽसिद्धिः पञ्चधा भिद्यते । तत्र पक्षव्यतिरेकेण हेतोरसिद्धिर्व्यतिरेकासिद्धिरभिधीयते । अयमेव चासाधारणो भवतीति । अन्येतु सपक्षासत्व एव व्यतिरेकासिद्धिः । तत्सत्वेतु हेतुरसाधारणो भवन् तुरीयो हेत्वाभासो भवतीति प्रतिपादयन्ति । नैयायिकसम्मतोऽनुपसंहार्योपि व्यतिरेकासिद्ध एव । परमते विरुद्ध एवात्र बाधक इत्युच्यते ।

एवमेते त्रयश्चत्वारो वा यथासम्भवमवान्तरविभागवन्तो हेतुदोषाः । बाधश्च प्रतिज्ञादोष इत्युक्तम् । सोऽयं, साध्यस्य प्रमाणान्तरेण परिच्छेदे, तदभावस्य तथाभावे, साध्यस्यैवाप्रसिद्धावपि वा भवतीति त्रेधा । एवमुदाहरणदोषा अपि साध्यवैकल्यसाधनवैकल्योभयवैकल्याश्रयहीनत्वादयो भवन्ति । एताननुमानदोषान् विभक्तविभक्तविभागेन निरूपयन्तश्शास्त्रकारास्तथा दूरं प्रयाताः यथा तत्सर्वं प्रकृते प्रतिपादयितुमुपक्रममाणः प्रकृतलेखस्य स्वरूपं प्रयोजनञ्चान्यथाकृत्य पठिताश्रोतॄणां महते वैमनस्याय कल्पेयेति अत्रैष समाचारः संस्थाप्यते ।

शब्दन्त्वधिकृत्य । शब्दो नित्य इति मीमांसका मन्यन्त इत्युक्तपूर्वम् । वृत्तिस्तु शक्तिलक्षणा गौणीति त्रैधम् । शब्दार्थः पुनर्जात्यखण्डोपाधिप्रवृत्तिनिमित्तकानां जातिरखण्डोपाधिर्वा । यौगिकपदानां द्रव्यम् । धातूनां यत्नातिरिक्तव्यापारः । आख्यातस्य यत्नरूपा भावना ।

पदानि स्वस्वार्थमवगमय्य निवृत्तव्यापाराणि भवन्ति । अवगतास्तु पदार्थाः परस्परसंसर्गरूपं वाक्यार्थं लक्षणया प्रतिपादयन्तीति वाक्यार्थे पदार्थानां लक्षणावादिन इमे मीमांसकाः । केवलं पदात्प-

दार्थावगमोऽपि स्मृतिरेवेति केचित् । अनुभवविशेष एवेत्यन्ये । वाक्यार्थबोधे न वैयाकरणानामिव धात्वर्थस्य मुख्यविशेष्यत्वम् । न वा नैयायिकानामिव प्रथमान्तपदार्थस्य । किन्त्वाख्यातार्थभूताया अर्थभावनायाः ।

तदिदं शब्दप्रमाणं पौरुषेयमपौरुषेयमिति द्विविधम् । तत्राद्या विधा लोके आप्तवाक्यम् । द्वितीया वेदवाक्यम् । अन्यथाऽपि द्वेधा शब्दप्रमाणं विभज्यते । विधायकं सिद्धार्थकमिति । विधायकमपि द्वेधा उपदेशातिदेशभेदादिति विभागस्य प्रथमभावी प्रक्रमः । अत्र लोके वेदे वा लिङादिप्रत्ययानां विधिरर्थः। नतु नैयायिकादिवदिष्टसाधनत्वादिकम् । सोऽपि विधिः प्रेरणा चोदना नोदना प्रवर्तनेत्यभिधीयमानो लोके लिङुच्चारयितुरिच्छाविशेषरूपः । वेदे तु वैदिकलिङुच्चारयितृपुरुषाभावेन तादृशलिङादिशब्दवृत्तिरेव कोऽपि व्यापारस्सः यश्शब्दभावनेति परिभाषयाऽभिधीयते नत्वीश्वरेच्छा तत्र प्रमाणाभावादित्यपरः कौमारिलमते विशेषः ।

दर्शनान्तरे क्वाप्यनङ्गीकृतमुपमानं प्रमाणमङ्गीकुर्वन्तो नैयायिकास्तस्य शब्दार्थव्युत्पत्तिफलकतामध्यवस्यन्ति । मीमांसकास्तु तदिदं प्रमाणमभ्युपयन्तोऽपि तत्र पराभिमतशब्दार्थव्युत्पत्तिमन्यथा निर्वहन्तोऽनुभूतपूर्ववस्तुसदृशस्य वस्त्वन्तरस्य प्रत्यक्षे सति यदनुभूतपूर्वस्य वस्तुनः प्रत्यक्षीक्रियमाणवस्तुसदृशतया ज्ञानञ्जायते तदुपमानफलं वर्णयन्ति ! एवन्तु साधयद्भिरमीभिरभिसंहितं फलमिदम् । यत्राङ्गानि न विशिष्याम्नातानि तादृशेषु विकृतिकर्मस्वङ्गजातप्राप्तये विकृतिकर्मणां बोधकाले प्रकृतिकर्मणामुपदिष्टाङ्गानान्नियमेनोपस्थितिः

ातिपादयितव्या । यदि तत् समानधर्मदर्शनजनितं स्मृतिमात्रं भवेत् ाहिं यथाकथञ्चित्स्मृतस्य कर्मणोऽङ्गानि विकृतौ कर्तव्यानीत्यत्र परि-नेश्चितप्रमाणाभावेनानाश्वासो भवेत् । अतो विकृतिपर्यालोचनसमये कृत्यवगमः परिनिश्चितप्रमाणविशेषाधीनः अनुभवरूप इति स्था-ःयत इति ।

अथ मीमांसकानां प्रतितन्त्रसिद्धान्तभूतमर्थापत्तिर्नाम पञ्चमं ामाणम् । इयमर्थापत्तिर्द्विधा दृष्टार्थापत्तिः श्रुतार्थापत्तिरिति । तत्रा-द्या 'यथा देवदत्तनिष्ठं दिने भोजनराहित्यं पीनत्वञ्च प्रत्यक्षदृष्टं ःवोपपादकं रात्रिभोजनं कल्पयती'ति । द्वितीयातु 'विश्वजिद्यागक-ःणकभावनाविषयकप्रवर्तना विधिप्रमिता इष्टोद्देश्यकत्वं विनाऽनुप-ाद्यमाना स्वर्गाद्युद्देश्यकत्वं कल्पयती'ति । एवं फलविशेषाश्रवणे फ-ःस्य, आधेयशक्तिरूपस्यापूर्वस्य, कारणादिवृत्तेस्सहजशक्तेश्च सि-द्धमेतादृशप्रमाणान्तराभ्युपगमस्य प्रयोजनमाचक्षते ।

भावाभावभेदेन भिद्यमाने पदार्थसामान्ये यो भावो येनेन्द्रि-ःण गृह्यते तदभावोऽपि तेनैवेन्द्रियेण गृह्यत इति प्रमाणचतुष्टयवा-दिनो नैयायिकाः तत्तदिन्द्रियैस्तत्तदभावे गृह्यमाणे तत्तत्प्रतियोग्युपल-म्भाभावस्य सहकारिकारणतामङ्गीकुर्वन्ति । तत्र मीमांसका अर्था-ात्तिपर्यन्तानि पञ्चप्रमाणानि भावमात्रगोचराणि नाभावग्रहणे व्या-प्रियन्ते । तस्मादभावग्राहकमभाव इति अनुपलम्भ इति च कथ्यमानं ःवतन्त्रमेव षष्ठं प्रमाणमित्यातिष्ठन्ते । एवं प्रमाणषट्त्वे वाल्मीकि-ःचनमुपष्टम्भकमुदाहरन्ति मीमांसकाः .... 'राम षट् युक्तयो लो-के याभिः सर्वोऽनुदृश्यते' इति ।

एवं सर्वेषु मीमांसकेषु मन्यमानेषु गागाभट्टो लिखति 'वस्तुतस्त्वर्थापत्त्यनुपलब्ध्योरन्योन्यभेदमनुमानाच्च भेदन्नाकलयाम' इति । अत्रैतत्संस्थाप्य प्रमेयकथा प्रस्तूयते ।

भावोऽभाव इति पदार्थसामान्यं द्विधा भवति । भावोऽपि द्रव्यगुणक्रियासामान्यभेदेन चतुर्विधः । तत्र नैयायिकाभ्युपगतैः पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभिस्सहाधिकं तमश्शब्द इति द्रव्यद्वयं मीमांसका अङ्गीकुर्वन्ति । अत्र परमत इव पृथिव्यप्तेजोवायुष्वेव कार्यद्रव्यत्वम् । एषां जालसूर्यमरीचिषु दृश्यमानानणून् विहाय तदारम्भकतयाऽनुमेयाः परमाणवो नाङ्गीक्रियन्ते । एतन्मतेऽवयवेभ्यो भिन्नाभिन्नोऽवयवी मतः । घ्राणरसनचक्षुस्पार्शनेन्द्रियाणि पुनर्मतान्तर इव क्रमेण पार्थिवाप्यतैजसवायव्यान्येव । श्रोत्रेन्द्रियन्तु श्रुत्यनुसारेण दिगात्मकमाचक्षते । न्यायमते वायुरप्रत्यक्षः । एतन्मते स्पार्शनप्रत्यक्षः । तथाऽऽकाशकालदिशोऽप्यत्र प्रत्यक्षा इति विशेषः । जीवात्मा परमात्मेत्यात्मानं विभज्य तत्र परमात्मा ईश्वर इति मतान्तरे मन्यन्ते । तादृशेश्वरे प्रमाणं प्रत्यनुयुक्ता अनुमानमुपन्यस्यान्ति । एवमीश्वरमनुमिमानाश्च वेदस्य पौरुषेयत्वं प्रतिपादयान्ति । मीमांसकाः पुनरेतदत्यन्तं निवर्तयितुं तादृशस्य सर्वज्ञपुरुषस्येश्वराभिधानस्य सद्भावाय द्रुह्यन्त इव तार्किकाणामनुमानं तीव्रेणाग्रहेण शतधा खण्डयन्ति । अत एवतु मीमांसकानान्निरीश्वरप्रथा जगति । तत्वतस्तु नास्ति कश्चिन्मीमांसको यो नैयायिकान् खण्डयन् सहृदयं सकलजगन्नेतारं परमपुरुषमसन्तमभिप्रैति । तत्र नारायणपण्डितस्ये-

दं वचनम् '.... सिद्धस्तार्किकेश्वरनिरासः । वैदिकेश्वरः परमकारुणिकः पुनरस्माकमनुगुण एव' ।

मनश्चैतन्मते विभु । नतु परमत इवाणु । इदमत्र तद्वैभवाङ्गीकारे निदानम् । मीमांसकेषु मतमिदमस्ति यज्जीवात्मनि नित्यं वर्तमान आनन्दः प्रपञ्चसम्बन्धरूपसंसारदशायां प्रतिबन्धकवशादनभिव्यज्यमानोऽपि तादृशसंसारविलयरूपमोक्षाधिगमेऽभिव्यज्यत इति । अभिव्यक्तिर्नाम ज्ञानं संवेदनमनुभवः । आत्मनश्च सुखानुभवो विना करणं न तथोपपत्तिमान् । अतो मोक्षदशायामप्यनुभवानुकूल आत्ममनस्संयोग आवश्यकः । तत्र मनश्चेदणु तर्हि मोक्षदशायामपि आत्मसंयोगानुकूलाया मनःक्रियाया आवश्यकत्वेन तत्प्रयोजकादृष्टाङ्गीकारनिर्बन्धो दुष्परिहरः स्यात् । तथाचादृष्टवत्वे आत्मनो मुक्तत्वहानिः । नत्वेवं किञ्चिदनुपपन्नं यदि विभु मन इति । मनसो विभुत्वे क्रियाविरहात् क्रियाजन्यस्संयोग आत्ममनसोर्न सम्भवतीति यच्छङ्क्यते तत्रामी नित्योऽपि संयोगोऽस्तीति प्रतिब्रुवते ।

तेजोऽभावरूपं तम इति न्यायमतम् । प्रतीयमानस्य गुणकर्मवत्वस्य बाधकं विना प्रतिक्षेपायोगात्तदपि स्वयन्द्रव्यमित्यमी मन्वते । शब्दश्च गगनगुण इति परमतम् । एतन्मते तु शब्दस्य नित्यत्वात् तत्वेचैकत्वात् , एकत्वेच विभुत्वात् परममहत्परिमाणवत्वनियमाच्च द्रव्यत्वमङ्गीक्रियते । स पुनरयं वाचकावाचकभेदेन द्विविधश्शब्दो भवति । तत्रावाचको भेरीप्रहरणजन्यध्वनिव्यङ्ग्यः । अन्यस्तु तात्वादिव्यापारजन्यध्वनिव्यङ्ग्यः । एतन्मते शब्दा एव देवताः । नत्विन्द्रसूर्यसोमाग्निशब्दवाच्या देवताविशेषाः कर्मसु त्यज्य-

मानद्रव्यप्रतिग्रहीतारस्सन्ति । देवताप्रतिपादकवेदवाक्यानामर्थवादत्वेन सन्निहितविधिविधेयार्थस्तुतिपरतया, एकस्य वाक्यस्यार्थद्वये तात्पर्यायोगात् स्वार्थतत्परत्वायोगेनच तादृशदेवतासु विशिष्य प्रमाणाभावः । विधिवाक्येषु तद्धितान्ततया चतुर्थ्यन्ततयाच निर्देशेन प्रतीतोद्देश्यत्वप्रतिपादनाय शब्दे तस्मिन्नुच्चारयितव्ये तस्यैव देवतात्वमवसीयत इति ।

शबरादिमीमांसकमतप्रतिपादनाय केवलं मीमांसकपण्डिता एतमर्थं स्थापयन्ति । स्वयन्तु हृदयेऽन्यमेवाभिप्रायमाकलयन्ति । नवमप्रथमे देवताधिकरणे खण्डदेव आह 'किन्तु शब्दमात्रं देवता । अर्थस्तु प्रातिपदिकानुरोधात् चेतनोऽचेतनो वा स्वीक्रियते । न तु विग्रहादिमान् । उपासनादौ परं ध्यानमात्रमाहार्यन्तस्येति जैमिनिमतनिष्कर्षः । मम त्वेवं वदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणम् ।'

रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा इति चतुर्विंशतिविधान् गुणान् वैशेषिकाः कथयन्ति । तत्रैतन्मते शब्दस्य द्रव्यत्वाङ्गीकारान्न गुणेषु गणनप्रसक्तिः । तथाऽस्मिन्मते शक्तिरूपस्य गुणान्तरस्य कारणभूतेषु सर्ववस्तुषु सद्भावाभ्युपगमात् धर्माधर्मयोरपि विहितनिषिद्धकर्मसम्बन्धितत्तत्फलोत्पादनानुकूलशक्तित्वेन न गुणेषु पृथग्गणनम् । एवञ्च शब्दधर्माधर्मान् हित्वा अन्यसम्मता एकविंशतिर्गुणाः, तदसम्मताः ध्वनिः प्राकट्यं शक्तिरिति त्रयः आहत्य चतुर्विंशतिर्गुणा इति तान्त्रिकमतम् । तत्र नीलादिरूपव्यक्तिरेकैव ।

द्रव्येषूत्पद्यमानेषु रूपव्यक्तेरभिव्यक्तिमात्रं न तूत्पत्तिरिति प्राचां मतम् । चतुर्विंशतिर्गुणा, इत्यबाधितव्यवहारानुरोधेन गुणा द्रव्यमात्रनिष्ठा इति नियममनाद्रियमाणा इमे सङ्ख्याया अद्रव्यवृत्तितामप्यनुमन्यन्ते । संयोगो नित्योऽपि सम्मत इत्युक्तम् । बुद्धिर्ज्ञानम् । तदिदमेतन्मतेऽप्रत्यक्षम् । अवैदिकाः केचित् ज्ञानाकारतां सर्वस्य जगतो वदन्तो बाह्यार्थानपलपितुं प्रवृत्ताः । तत्प्रतिसमाधातुं ज्ञानस्याप्रत्यक्षतां साधयन्त इमे अर्थाभावे तत्प्रकाशानुमेयस्य ज्ञानस्य शशशृङ्गसब्रह्मचारिता सम्प्राप्नोतीति प्रतिपादयितुमुद्युञ्जते स्म ।

ज्ञानमिदं स्मृतिरनुभव इति द्विधा विभज्यते । ज्ञानमुत्पद्यमानं क्वचिन्न् समयान्तरे बाध्यमानं भ्रान्तिरूपं भवति । क्वचित्तु यथावत् ग्राह्यं वस्तु गृहीत्वा कालत्रयेप्यबाधितं भवति । तत्रादिममप्रमाणमिति, अनन्तरं प्रमाणमिति व्यवह्रियते । किंरूपं तत्प्रामाण्यमित्यत्र यथार्थत्वं, तद्धर्मवति तद्धर्मावगाहित्वं, तदिति न्यायवादिनो वदन्ति । एवमभिधीयमाने यथार्थस्मृतेरपि प्रामाण्यं प्रसज्यते । यथार्थत्वेऽपि स्मृतेः प्रामाण्यव्यवहारो न भवतीति सर्वतन्त्रसिद्धान्तोऽयम् । प्रसङ्गमिमं वारयितुं स्मृतिभिन्नत्वं यथार्थत्वमुभयम्प्रामाण्यमिति परेषां समाहितिः । मीमांसकास्तु अगृहीतग्राहित्वमबाधितविषयत्वं च प्रामाण्यमिति मन्वते । गृहीतग्राहित्वान्न स्मृतिः प्रमाणम् । बाधितविषयत्वान्न भ्रान्तिः प्रमाणमिति ।

एतन्न् प्रामाण्यं प्रत्युच्चावचो विवादः । प्रामाण्याप्रामाण्ययोरुभयं ज्ञाने उत्पद्यमाने तत्र स्वयमुत्पद्यत इति सांख्याः । अप्रामाण्यं स्वतः प्रामाण्यं परत इति बौद्धाः । उभयमपि परत इति नैयायिक-

वैशेषिकाः । एतेषु पक्षेषु वेदप्रामाण्यं कम्पमानमिव वर्तते । अप्रामाण्यस्यापि स्वतो भावित्वे हि एकान्ततः प्रामाण्यं वेदोत्थज्ञानस्य निष्कम्पन्न सिद्ध्यति । उभयोः परतस्त्वं वदन्तो नैयायिकादयोऽपि प्रामाण्यस्य गुणाधीनत्वं तत्रापि शाब्दज्ञानप्रामाण्यस्य शब्दोच्चारयितृपुरुषीययथार्थज्ञानरूपगुणाधीनत्वनियममाकलयन्तो वेदोत्थज्ञानप्रामाण्यनिर्वाहाय वेदार्थविषयकयथार्थज्ञानवन्तं पुरुषमनुमिमाना वेदस्यान्ततः पौरुषेयत्वसाधने धौरन्धरीं बिभ्रति । तदपि तु निराचिकीर्षवो मीमांसकाश्चतुर्थं प्रकारमनुसरन्ति—स्वतः प्रामाण्यमुत्पद्यते परतस्त्वप्रामाण्यमिति । एवं हि सति नित्यवेदवाक्यजनितज्ञानस्य चिरमन्वेषणेऽपि पुरुषसम्बन्धिभ्रमप्रमादाशक्तिविप्रलिप्सादोषसंस्पर्शाभावादनपवादं स्वतस्सिद्धं प्रामाण्यं स्थिरीकृतं भवतीति ।

ध्वनिं शब्दविशेषमाकाशगुणमिच्छन्ति वैशेषिकाः । मीमांसकास्तु वायुगुणः शब्दाभिव्यञ्जक इति । प्राकट्यमधिकृत्य नारायणपण्डितस्य पङ्क्तय इमास्साक्षाल्लिख्यन्ते । ‘प्राकट्यं (विषय) व्यवस्थापकः सर्वद्रव्यवर्ती सामान्यगुणः । स च संयुक्ततादात्म्यसम्बन्धेन प्रत्यक्षगम्यः । तच्च प्राकट्यं द्रव्याश्रितमपि तेन तादात्म्यसम्बन्धाज्जातिगुणकर्माण्यपि परम्परया समाश्रयत इति न तेषामविषयत्वप्रसङ्गः । प्राकट्याश्रयो विषय इति विषयलक्षणमाहुराचार्याः । ननु किमिदं प्राकट्यन्नाम ? श्रूयताम् । सन्ति तावल्लौकिकपरीक्षकाणां घटः प्रकाशते घटो भाति प्रकटो घट इत्यादयो व्यवहाराः । न चैते भ्रान्तिमूलाः । बाधकाभावात् । अबाधितानामपि प्रत्ययानां भ्रान्तिमूलत्वकल्पने सर्वेषामपि तथात्वप्रसङ्गात् । तस्मादेते व्यवहारा एव स्वोपपादाय प्रका-

शविशिष्टमर्थमवकल्पयन्ति । तत्र विशेषणगुणभूतः पदार्थः प्राकट्यमित्युच्यते । न चागन्तुकं ज्ञानमेव प्रकाशपदार्थ इति वाच्यम् । आत्मसमवेतस्य ज्ञानस्य घटसमवेतत्वव्यवहारानुपपत्तेः । ननु प्राकट्याश्रयस्यैव विषयत्वे भूतभविष्यतोः प्राकट्याश्रयत्वाभावात्कथं विषयत्वम् ? न च तयोर्विषयत्वमेव नास्तीति वाच्यम् । नदीपूरणघनोन्नतिप्रभृतिभिर्भूतभविष्यद्वर्षानुमानाभावप्रसङ्गात् । इति चेन्नैवम् । भूतभविष्यतोरपि प्राकट्याश्रयणात् । ननु गुणिनमन्तरेण कथं गुणोत्पत्तिः । सङ्ख्यावदिति ब्रूमः । न च सङ्ख्यैव भूतभविष्यतोर्नास्तीति वाच्यम् । तिस्र आहुतयो हुताः षडपूपा भक्षिताः, दश मोदकाः कार्या इत्यादिव्यवहाराणां भ्रान्तिमूलत्वप्रसङ्गादिति सिद्धं प्राकट्यम् ।'

दाहाद्यनुकूला वह्न्यादिद्रव्यगता, स्वर्गादिफलानुकूला यागादिक्रियागता, यागाद्युपकारानुकूला तत्साधनभूतपश्वादिपरिच्छेदकश्वेतादिगुणगतेति त्रेधा शक्तिः । इत्थमेते न्यायमतमपेक्ष्य गुणेषु विशेषाः ।

जातिषु सत्ताया द्रव्यगुणकर्मत्रितयमात्रवृत्तित्वं न्यायवैशेषिकमतावलम्बिन आचक्षते । मीमांसकाः पुनर्जातिगतामपि तां मन्यन्ते । क्रियाव्यक्तिरपि जगतीतले एका नित्या तदातदा पुरुषप्रयत्नेनाभिव्यक्तिमात्रशालिनीति प्राञ्चो मीमांसकास्सङ्गिरन्ते ।

एवमेतन्मते भावपदार्था इमे चत्वारः । मतान्तरे विशेषसमवायात्मकमतिरिक्तं पदार्थद्वयं प्रतिपादितम् । तदधिकृत्य नारायणपण्डितो लिखति—' विशेषसमवायौ तु शशविषाणसब्रह्मचारिणौ । तत्सिद्धौ प्रमाणाभावात् । नन्वस्त्येव विशेषसिद्धावनुमानं ....तदयुक्तम् । पू-

थक्त्वेन सिद्धसाध्यत्वात् । तस्मान्नित्यवर्ति(र्ती) व्यावृत्तिमात्रबुद्धिविषयो विशेष इति भाषिणो वैशेषिका दूषिता वेदितव्याः । समवायेऽपि प्रत्यक्षमनुमानं वा प्रमाणम् । तत्र न तावत्तार्किकाभिमतं प्रत्यक्षम् । अप्रतिभासात् । न च पटाश्रयं शौक्ल्यम्, इह पटे शौक्ल्यम् इत्यादिप्रत्ययानामिन्द्रियान्वयव्यतिरेकानुविधानात्समवायस्य प्रत्यक्षत्वमिति वाच्यम् । समवायस्वरूपस्यैव विप्रतिपन्नत्वादेतेषां प्रत्ययानां समवायविषयत्वासिद्धेः। सिद्धे हि समवाये तादृशानां प्रत्ययानां समवायविषयत्वोपवर्णनमुपपद्यते । ............नापि समवायेन विनाऽनुपपन्नम् । भेदसहिष्णुनाऽभेदेनोपपत्तेः । अपिच समवायः समवायिभ्यामत्यन्तभिन्नो वा नवा ? न तावदभिन्नः । समवायिव्यतिरेकेण समवायस्याभावप्रसङ्गात् । भिन्नत्वे तु समवायस्य समवायिभ्यां सम्बन्धोऽस्ति वा न वा ? न तावदस्तीति वाच्यम् । तस्यापि सम्बन्धस्य सम्बन्धान्तरकल्पनेनानवस्थाप्रसङ्गात् । नापि नास्तीति वाच्यम् पिण्डसामान्यसमवायानां परस्परं सम्बन्धाभावे सति इयं गौरिति व्यवहारमपहाय पिण्डगोत्वसमवाया इति व्यवहारप्रसङ्गात् । तस्मादवयवावयविनोर्जातिजातिमतोः क्रियाक्रियावतोश्च तादात्म्यमेव सम्बन्धः ।

अभावपदार्थोऽपि न्यायमत इव चतुर्धेति ज्ञातेव नो मीमांसकसम्मता पञ्चपदार्थाः । वैशेषिकादिसम्मतान् कतिपयपदार्थाननुमन्यमानो भाट्टचिन्तामणिकारोऽन्यथाभूतां पदार्थसङ्ख्यामाकलयति । प्रमेयप्रसङ्गेऽयमित्थमाह— ' पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोऽन्धकारशब्दरूपाण्येकादश गुणा रूपरसगन्धस्पर्शपरिमाणसंयोग-

विभागपरत्वापरत्व गुरुत्वद्रवत्वस्नेहसंस्काराद्दष्टबुद्धिसुखदुःखेच्छाद्वेष-यत्ना इति विंशतिः । कर्म चलनात्मकमेकम् । सामान्यं परापररूपं द्वेधा । समवायश्चैकः । शक्तिस्त्रिधा सहजाऽऽधेया पदशक्तिश्चेति । अभावस्त्रिधा ध्वंसोऽत्यन्ताभावो भेदश्चेति । एवञ्च द्रव्यगुणकर्म-सामान्यसमवायशक्त्यभावास्सप्त पदार्थाः । सङ्ख्यापि गुणादिवृत्ति-त्वात्पदार्थान्तरमित्यन्ये--' । अत्र द्रव्यविषये न पूर्वमताद्भेदः । गुणेषु पुनस्सङ्ख्या न गण्यते । तेन तन्मतेन तस्याः पदार्थान्तरत्वं प्रतीयते । स्वयन्तु ' सङ्ख्याऽपि............पदार्थान्तरमन्य' इत्यन्य-मतत्वेन तत् कीर्तयति । तथा पृथक्त्वगुणोऽप्यगणितः । कदाचि-दयं तस्यान्योन्याभावरूपतां मनितवान् भवेत् । नैयायिकसम्मतौ धर्माधर्मौ केश्चिन्मीमांसकैर्यागादिकर्मशक्तित्वेन कीर्तितौ चिन्ताम-णिकारोऽदृष्टमित्येकगुणत्वेन गुणेषु पठति । शक्तेः कारणवृत्तित्व-नियममालोचयन् विहितनिषिद्धकर्मजन्यस्यादृष्टस्य कर्त्रात्मगतत्वेन तादृशकर्मशक्तित्वानुपपत्त्या तादृशकर्मभिः स्वस्वफलजननेऽवान्तर-व्यापारभूतमदृष्टं न तु शक्तिरित्यस्याशय उन्नीयते ।

ध्वनिमसौ शब्दनित्यत्वसाधनावसरे वायुवृत्तित्वेन प्रतिपाद-यन् गुणेषु तं गणयितुमुदासीनः । तथा ज्ञाततविषयताऽपरपर्यायं प्राकट्यं साधयन् न क्वचित्पदार्थेषु तत्पठति । सप्तेति स्वयं पदार्था-न्परिच्छिनत्ति । अत्र विषये स एवानुयोक्तव्य इति भाति । गुणा-नान्द्रव्यमात्रवृत्तित्वनियममादृत्य तु शक्तिमतिरिक्तपदार्थमसौ मन्यते । रूपादीनामनेकत्वमुत्पादविनाशौ चैतत्सम्मतौ । विशेषपदार्थं तिर-स्कृत्य समवायं परमयमनुमन्यते । एतन्मते न सुखानुभवो मोक्षः ।

अपितु प्रपञ्चसम्बन्धविलय एवेति प्रतीमः । अतएव मनसोऽणुत्वमप्यसौ स्वीकरोतीति समयसङ्कोचाहितनिर्बन्धा विषयतोऽस्मान्निवृत्य परत्र चक्षुर्निक्षिपेम ॥

---



# अथ प्राभाकराधिकारः षष्ठः ।

प्रतिपादितपूर्वमिदं यत् शबरादनन्तरं भट्टकुमारिलप्रभाकरदृष्टिभेदेन शास्त्रमिदं द्वेधा विभक्तमभूदिति । तत्रानुपदं वृत्तेनाधिकारद्वयेन कुमारिलमतावलंबिभिः प्रतिपादितमर्थं यथाशक्ति संगृह्य प्रादर्शयम् । अस्मिन्पुनरधिकारे मतान्तरेऽन्यथाङ्गीकृतं अर्थं सङ्क्षिप्तं प्रदर्शयितुं यतिष्ये ।

अत्र मे साधनसम्पत्तिर्लघीयसी । प्रभाकरमतानुसारिणो निबन्धा जगति लुप्तप्रायाः । सन्तोऽपि द्वित्रा मुद्रणकथाद्दवीयांसः । एकस्तु केवलं शालिकनाथस्य प्रकरणपञ्चिका नाम निबन्धो हस्तं मे प्राप्तो यस्य साहाय्येन शास्त्रदीपिकान्यायरत्नमालयोः पार्थसारथिमिश्रेण तत्रतत्र खण्डनहेतोरनतिविस्तरमुपन्यस्तं प्राभाकरमतसङ्ग्रहं विशदमिव ज्ञातुमस्मि पारितवानिति मेऽभिमानः । तमेतं ग्रन्थमेवाधिकृत्य प्रथमं किञ्चिदभिधास्ये ।

मुद्रितेऽस्मिन्पुस्तके चतुर्दश प्रकरणानि सन्ति । तेष्वाद्यं शास्त्रमुखन्नाम जिज्ञासाऽधिकरणविचाररूपम् । चोदनासूत्रे भाष्यकारेण प्रतिपादितं शब्दस्यार्थव्यभिचारित्वाभावं समर्थयितुं नीतिपथो नाम द्वितीयं प्रकरणम् । तृतीये जातिनिर्णयः । नयवीथ्यां चतुर्थप्रकरणे सर्वेषामेव ज्ञानानां यथार्थत्वं साधयति । अनन्तरं प्रमाणानि निरूपयति । अस्य प्रकरणस्य प्रमाणपारायणसमाख्या । व्याख्यानरूपस्यैतत्प्रकरणस्य मूलभूताः कारिकाः अमृतकलेति पृथक् षष्ठप्रकरणतया गण्यन्ते । एवं प्रत्यक्षसूत्रपर्यन्तविषये निरूपिते शब्दार्थसम्बन्धनित्यत्वसाधनकृते निर्मलाञ्जनं नाम सप्तमं प्रकरणम् ।

त्सूत्रव्याख्यानावसरे भाष्यकारकथितामात्मास्तितां तत्वालोकनामके-
ानन्तरप्रकरणेन स्थापयति । पश्चात् शब्दनित्यत्वविषयः शब्दा-
ाकरणविचारः न्यायशुद्ध्यभिधाने प्रकरणे क्रियते । अनन्तरं मीमां-
ाजीवरक्षाऽभिधं क्षणिकत्वनिराकरणपरं प्रकरणम् । अत्र प्रकरणे
ासन्नविंशाः पङ्क्तीर्विना सर्वमन्यल्लुप्तम् । तदनन्तरं प्रकरणं
ाक्यार्थमातृकेति । अस्याप्युपक्रमे कियान् ग्रन्थस्त्रुटितः । अवशि-
उपलब्धस्तु भागो 'वाक्यार्थमातृकाया द्वितीयः परिच्छेद' इति
माख्यायते । तेन कृत्स्न एव प्रथमः परिच्छेदः प्रणष्ट इति भाति ।
षयकरणीयन्नामानन्तरं धात्वर्थस्य भावनाऽन्वयप्रकारप्रतिपादकं
दर्शं प्रकरणम् । प्रमाणविचारावसर एव मेदप्रमाणानि शब्दान्त-
दीन्यभिधाय प्रथमाध्याययुगळे स्वसम्मतेषु पदार्थेषु प्रकरणैरेता-
भिर्व्युत्पादितेषु तृतीयप्रभृति द्वादशपर्यन्तेऽध्यायजाते तद्व्युत्पा-
ायाङ्गपारायणन्नाम प्रकरणान्तरमनन्तरं प्रवर्तितम् । विशिष्यत्वति-
ाविशेषं वक्तुं चरमं प्रकरणमतिदेशपारायणन्नाम ।

अत्र प्रकरणक्रमे जातिनिर्णयस्य तृतीयं स्थानन्नोचितं, अ-
तु शब्दार्थसंबन्धविचारानन्तरं शब्दप्रमाणनिरूपणानन्तरं वेत्य-
षां प्रकरणानां तर्कपादभाष्याधीनक्रमत्वं पश्यन्तो मन्महे । प्र-
देन तु लेखकस्यान्यस्य वा स्थानान्तरे निवेशितमिदं भवेत् । तथा
लिकनाथः स्वयं 'प्रमेयपारायणे' इत्यसकृदभिदधाति । तस्यै-
शोऽपि नास्मिन्पुस्तके दृश्यते । अन्यदपि । बहुत्र मूलभूताः
रिका विरचय्य तद्व्याख्यानरूपेणैव प्रकरणान्यत्र प्रवर्त्यन्त इति
लमिदमिदंग्रन्थकारस्य । अतश्च प्रमाणपारायणे मूलभूतकारिका-

ामपि व्याख्येयतयाऽन्तर्भूतत्वात्पुनः 'अमृतकला नाम षष्ठं प्रकरण-
ाति न युक्तं पृथक्सन्निवेशनम् । अथवा 'नयवीथ्याख्यं नाम प्रक-
ग' मित्येवमादि शीर्षं न्यस्यतां मुद्रापयितॄणां शोधकानां वाऽयम-
राध इति विदन्तोऽपि वदन्तोऽपिच न वयं विस्मरामो यथाकथ-
ञ्चित्पुस्तकं सम्मुद्र्यास्मभ्यं प्रकाशितवद्भ्यो महद्भ्योऽल्पेतरां नः
ातज्ञतां प्रकाशयितुम् । एवमस्य शालिकनाथग्रन्थस्य विषयनिरू-
णक्रमं परिकलयतान्निरूपकाणां स्फुटमिदं प्रतीयेत यदेतदुल्लिखितं
न्थानमास्थायैवैतन्मतविधूननप्रवृत्तः पार्थसारथिमिश्रो न्यायरत्नमा-
ायां विषयविवेचनक्रमं तथाभूतमतानीदिति ।

प्रागवोचं उपदेशातिदेशभेदेन द्विविधे शब्दप्रमाणे उपदेशा-
श्रितं पूर्वं षट्कम्, अतिदेशाश्रितमुत्तरमिति । तत्रान्याङ्गत्वेनावधा-
ातानां पदार्थानामन्याङ्गत्वबोधकं प्रमाणमतिदेशमिच्छन्ति । तत्र प्रा-
ाकरा वदन्ति विकृतिकर्मणां तत्तद्वचनोपदिष्टानामङ्गापेक्षायामेवान्य-
ीयान्यङ्गानि तत्रानीयन्ते । तेन औपदेशिकपदार्थसम्बन्धयाकाङ्क्षा-
ूरणायाध्याहृतानां पदार्थानामप्यौपदेशिकत्वमेव । अन्यथा हि 'वि-
ाजिता यजेते' त्यत्राध्याहृतफलसम्बन्धस्यौपदेशिकत्वं दन्धनं स्यात् ।
ावं विकृतिष्वौपदेशिकानामप्यङ्गानां विकृतिसम्बन्धात्पूर्वमेवान्याङ्ग-
ास्य प्रमितत्वेन पुनरन्याङ्गत्वबोधनेऽतिदेशव्यवहारः । न पुनरेता-
ताऽतिदेशो नामोपदेशादत्यन्तं विविक्तविषय एवेति निर्बन्धः । त-
मादुपदेशविषयं पूर्वमतिदेशविषयमुत्तरमिति नायं षट्कार्थविवेको
ाक्तः । किन्तूपदेशविषयं पूर्वमुपदेशकार्यविषयमुत्तरमिति वाच्यम् ।
कृतिषु खलूपदेशप्रमितानामर्थानामङ्गत्वनिर्वाहाय तत्कार्यभूतः प्र-

धानकर्मोपकारः कल्प्यते । एवञ्चोपदेशाधीनं कार्यकल्पनमित्युपदेशस्योपजीव्यत्वात्पूर्वषट्कस्योपदेशविषयत्वम् । विकृतिषु पुनः कार्यभूतस्योपकारस्यैव प्रथममपेक्षितत्वेन प्रकृतेस्तत्प्राप्तौ तज्जनकतया पश्चात्पदार्था अङ्गतया प्राप्यन्ते । एवञ्चोपकाररूपकार्याधीनत्वात् विकृतिषु पदार्थोपदेशस्य विकृत्यङ्गसम्बन्धिविचारप्रवृत्तस्योत्तरषट्कस्योपदेशकार्यविषयत्वमिति ।

अध्यायेष्वपि प्रथमस्य विषयो धर्मप्रमाणानि विध्यर्थवादमंत्रनामधेयात्मिका श्रुतिः स्मृत्याचारौ चेत्युक्तम् । तदिदं गुरुमतावलम्बिनो न सहन्ते । विधिरेव केवलन्तत्र प्रमाणम् । तस्यैव च प्रामाण्यन्द्रढयितुं तदन्याचिन्तनमिति ब्रुवते । एवं गुरुमते न पूर्ववत्कर्मभेदपुरस्सरं भावनाभेदो द्वितीयाध्यायार्थः । अपितु तत्तत्पदार्थविधायकवाक्यात्मकशास्त्रभेदः । शब्दान्तरादिप्रमाणान्यपि शास्त्रभेदकतयैवोपन्यस्यन्ते । सङ्ख्या परं भावार्थमात्रस्य भेदिका । न शास्त्रस्येति । तृतीये भट्टमतेन॰ प्रतिपादितमवान्तरप्रकरणममी नानुमन्यन्ते । पञ्चमाध्यायेऽपि श्रुत्यादिप्रमाणप्रमेयस्य क्रमस्य विधेयत्वं भट्टमत इवात्र न सम्मतम् । तर्हि क्रमः किमनादरणीय इत्यत्र कथमपि प्राभाकरास्समादधति । बाधार्थे दशमे बाध्यं पदार्थमतिदेशो विकृतिषु नैवानयतीति भट्टमतम् । तत्र तृतीयाध्याये स्थितस्य प्रबलप्रमाणेन दुर्बलप्रमाणबाधस्याप्राप्तबाधत्वं, दाशमिकबाधस्य प्राप्तबाधत्वमिति चिरन्तनो भेदप्रतिपादनप्रकारः । एवं सति भट्टमतानुसरणे दाशमिकबाधस्याप्यप्राप्तबाधत्वप्रसङ्ग इति पश्यन्तो गुरुमतानुयायिनो बाध्यानामपि पदार्थानामतिदेशेन विकृतिषु प्राप्तिमुपपाद्य प्राकृतकार्यविरहे सत्यननु-

नेन बाध इति निरूपयन्ति । इत्थमयमतिस्थूलमुदाहारि गुरुमतेऽ-
ायार्थनिरूपणप्रकारविशेषः । बहुत्र तु प्रत्यध्यायं सन्ति मता-
रापेक्षया विशेषाः येषां विशिष्य प्रतिपादनं तदेकपरे उपन्यासा-
रे युज्येततराम् ।

अस्ति प्रमाणेष्वप्येतन्मते विशेषः । षट्सु निर्दिष्टपूर्वेष्वन्ति-
ानुपलब्धिप्रमाणन्निरस्यान्यानि पञ्चप्रमाणान्यमी अभ्युपगच्छन्ति ।
यक्षादीनां पञ्चानां प्रमाणानां भावविषयकत्वेनाभावविषयकं पृथक्प्र-
णमनुपलब्धिरूपमावश्यकमिति भाट्टानामभिसन्धिः । प्रत्यक्षादीनां
दृशभावविषयकत्वं तादृशभावसम्बन्ध्यभावविषयकत्वं तेषामेव प्र-
णानां सम्भवतीति वदन्तो नैयायिका अनुपलब्धेः पृथक्प्रमाणता-
रस्यन्ति । प्राभाकरास्तु अभावरूपप्रमेयस्यैवाप्रसिद्धत्वात् तत्प्रमा-
ााय प्रमाणान्तराभ्युपगमस्य का कथेति प्रतिक्षिपन्ति ।

ज्ञानन्तावत्प्रमाणं, यथार्थं, किञ्चित् ; अतथाभूतञ्च किञ्चि-
त्यन्ये शास्त्रकृतस्सर्वे मन्यन्ते । तदिदं नेच्छन्ति प्राभाकराः । न-
दाचित् काचित् ज्ञानव्यक्तिरयथार्थभूता भवति । भ्रान्तिव्यवहारस्तु
दाग्रहनिबन्धनः । भेदाग्रहनिबन्धन इत्ययमर्थः—कश्चित् शुक्तिं
त्यक्षमीक्षते । तत्र स्फुरितं रजतसादृश्यं पाळपळ्यरूपं शुक्तेराका-
न्तरं तिरोदधाति । स्मारयति च रजतम् । तदा च शुक्तिरजत-
भेदो न गृह्यत इति तदानीन्तनं ज्ञानं भ्रान्तिरित्युच्यते । वस्तु-
स्तु न तदानीमेकमेव ज्ञानम् । किन्तु द्वे ज्ञाने । एकम् 'इद'मिति
त्यक्षात्मकम् अपरं 'रजत' मिति स्मरणात्मकम् । तत्र प्रत्यक्षं
ाक्तिविषयकन्नायथार्थम् । स्मरणमपि रजतविषयकन्नायथार्थमिति

कस्यैदानीमयथार्थत्वमिति गुरुमतविदामभिसन्धिः । एतावानपि प्रयासो वेदवाक्यजन्यबोधस्य प्रामाण्यस्वतस्त्वस्याप्रामाण्यशङ्कालेशविनिर्मोकेन निर्वाहायेति प्रतिभाति ।

ज्ञानमिदमेतन्मते न मतान्तर इवानुमेयम् । अपितु प्रत्यक्षम् प्रत्यक्षत्वमपि न न्यायमत इव प्रत्यक्षात्मकज्ञानान्तरविषयत्वं किन्तु सर्वासां ज्ञानव्यक्तीनान्नियमेन स्वसंवेद्यत्वेन स्वात्मकज्ञानाविषयत्वन्तत् । स्मृत्यनुभवभेदेन द्विविधे ज्ञानेऽनुभवस्य स्मृतिव्यावृत्तं प्रमात्वापरपर्यायं प्रामाण्यं यथार्थानुभवत्वरूपमिति न्यायविदाम्मतमनादृत्यानधिगताबाधितार्थविषयत्वमिति भाट्टा ऊरीकुर्वन्तीत्युक्तम् । अत्राप्यनुभवस्यानधिगतार्थविषयकत्वमनाद्रियमाणाः प्राभाकरा अनुभवत्वमेव प्रामाण्यमिति कथयन्ति । अत एव व्याप्तिग्रहणसमय एव यो यो धूमवान् ससोऽग्निमानिति सर्वेषामेव धूमवद्देशानां वह्निमत्वस्यावगतत्वात् पर्वतादौ धूमादिना वन्ह्यादिपदार्थानुमानस्य गृहीतग्राहितया स्मृत्यादिवत्प्रामाण्यन्न स्यादित्याक्षेपं सुखमिमे समादधति—‘ सत्यम्, स्यात् ( अनुमानमप्रमाणम् ) , यद्यनधिगतार्थगन्तृ प्रमाणमिति प्रमाणलक्षणं स्यात् । अनुभूतिस्तु प्रमाणमित्युक्त’मिति । अन्येतु पर्वतादेरगृहीतपूर्वत्वं स्थापयितुमनुमानोपयोगिन्या व्याप्तेराकारमन्यथा शिक्षयन्तीति प्रागेवोक्तप्रायम् ।

अथात्र प्रत्यक्षानुमानयोः शुष्कशास्त्रिभिः परिशीलनीयानधिकतरावधानापेक्षिणो विशेषानुपेक्ष्य शब्दं प्रति याम । तमिमं प्रमाणशब्दं पौरुषेयापौरुषेयभेदेन द्वेधा विभज्य तत्र पौरुषेयं लोके आप्तवाक्यमिति कौमारिलानां मतमभिहितम् । तत्र प्राभाकरा अन्य-

था मन्यन्ते—लौकिकवाक्यानान्नैव प्रमाणशब्दत्वम् । प्रमाणशब्दस्तु वेदात्मकोऽपौरुषेय एव । तदिदं विवृत्याभिधीयते । पदानां काममस्ति स्वाभाविकी अर्थबोधनानुकूला शक्तिः । न केवलमियं पदार्थमात्रबोधनानुकूला शक्तिः । अपि तु इतरान्वितपदार्थबोधनानुकूला । अत एव केवलं पदार्थेषु तत्तत्पदैरभिहितेषु तेषां परस्परान्वयरूपवाक्यार्थे पुनर्लक्षणा भट्टमत इति तदनुसारिणोऽभिहितान्वयवादिन इति व्यवह्रियन्ते । प्राभाकराः पुनस्तादृशान्वयस्यापि तादृशपदार्थविशेषणतया शक्यत्वं पदवाच्यत्वञ्चाङ्गीकुर्वन्तोऽन्विताभिधानवादिनो भवन्ति । अनया स्वभावसिद्धयाऽन्विताभिधानानुकूलया शक्त्या वैदिकेषु पदेषु बोधञ्जनयत्सु तस्मिंश्च बोधे स्वतस्सिद्धप्रामाण्यशालिनि, वेदवाक्यानां स्वतस्सिद्धं प्रामाण्यं स्थितमप्रकम्प्यमिति प्रतिपादिते पुनः काचित् शब्दप्रमाणमात्रानुबन्धिनी शङ्का समुदिता....लोके शब्दस्य विसंवाददर्शनात् वेदेऽपि किन्न तथा भविष्यतीति । तत्र भाट्टा--ऊचुः शब्दाविसंवादे लोके तादृशशब्दप्रयोक्तुर्भ्रमप्रमादादिदोषोपलम्भेन तच्छब्दजनितबोधस्य स्वतः प्रामाण्यमपोद्यत इति कामं भवतु लोके पौरुषेयशब्दविशेषस्याप्रामाण्यम् । वेदे तु नित्यत्वान्न विसंवादशङ्काप्युदेतुमलम् । शब्दाविसंवादे हि कारणभूतो दोषः प्रयोक्तृपुरुषसमाश्रयः । पुरुष एव चेत्तत्रासद्भूतः कथङ्कारं तद्गतभ्रमादिशङ्काऽऽत्मानं लभतामिति । वेदप्रामाण्यपरिपालने भूयांसमिवादरमाबिभ्राणाः प्राभाकरास्तु लौकिकशब्दानां प्रमाणत्वे हि तत्र कचित्प्रामाण्यव्यभिचारदर्शनाद्वेदशब्देऽपि तद्दृष्टान्तेन तच्छङ्कावतारप्रसक्तिः। तदेव तु नाभ्युपगम्यते। कथं खलु लौकिकशब्दप्रमाणव्यवहारे

जगति बहुलं परिदृश्यमाने तत्प्रामाण्यमभावं नीयते! तत्र शालिकनाथ एव चतुरं स्वमतमुपपाद्य समाधातुं प्रगल्भतेतराम् । तत्रेमानि तदीयानि पद्यानिः—

श्रूयतामवधानेन गतिर्नरगिरामपि ।
अनुमानात्पृथग्भावं तासान्नेच्छन्ति सूरयः ॥
वाक्यं हि पुरुषाधीनरचनं लौकिकं सदा ।
शङ्क्यमानायथार्थत्वं नार्थनिश्चायकं स्वतः ॥
अन्योन्यानन्वितार्थानि पदान्यपि हि मानवाः ।
रचयन्तो विलोक्यन्ते तेन नान्वयनिश्चयः ॥
केचित्तावद्भ्रमेणैव केचिदाशयदोषतः ।
प्रमादात्केऽप्यशक्तेश्च केऽप्यनन्वितवादिनः ॥
तदुक्तानां पदार्थानां यद्यप्यन्वययोग्यता ।
तथाऽप्यनन्वितस्यापि दृष्टेर्नान्वयनिश्चयः ॥
शङ्क्यमानायथार्थत्वरचनं तेन पुंवचः ।
श्रुतमात्रकमेवार्थे न तावन्निश्चयावहम् ॥
यावद्वक्तुरविज्ञातं पूर्वभावि प्रमान्तरम् ।
विवक्षितार्थविषयमिन्द्रियार्थनिबन्धनम् ॥
तस्य ज्ञानञ्च वाक्येन लिङ्गभूतेन गम्यते ।
ज्ञात्वैवार्थं ब्रवीतीति य एवमवधारितः ॥
तस्य ज्ञानेन नियतं वाक्यं ज्ञानानुमापकम् ।
ज्ञानञ्चार्थाविनाभावि तेनार्थेऽपि विनिश्चयः ॥
ततोऽर्थे निश्चिते पश्चात्सोऽर्थो वाक्येन गम्यते ।

तस्यान्दशायां वाक्यस्य तस्य स्यादनुवादता ॥
पूर्वञ्च लिङ्गभूतत्वं वक्तुर्ज्ञानावधारणे ॥
वक्तृज्ञानप्रसूतं हि वाक्यन्तत्कार्यमिष्यते ।
कार्यात्कारणसिद्धिश्च सर्वेषामनु वादतः (मानतः?)
पौरुषेयमतो वाक्यन्न शास्त्रमाभिधीयते ॥

एवं लौकिकवाक्यानां प्रामाण्यन्निरस्य यत्कृते एतावान्प्रयासस्तदाह—

एवञ्च सति लिङ्गस्य व्यभिचारोऽयमीक्ष्यते ।
न शास्त्रस्येति ।

एतावति स्थातुमनभिलषन्नयं सर्वविज्ञानयथार्थत्ववादी उपरि लिखति—

लिङ्गस्यापि न चैवायं व्यभिचारोऽस्ति किन्तु यः ।
लिङ्गालिङ्गे न शक्नोति विवेक्तुं मूढचेतनः ॥
तस्यालिङ्गे लिङ्गरूपसाधारण्यनिबन्धनः ।
लिङ्गसंव्यवहारोऽयं विपरीतः प्रवर्तते ॥
तेन न व्यभिचारोऽस्ति द्वयोर्लैङ्गिकशास्त्रयोः ॥

एवं शब्दस्य लिङ्गत्वेऽपि व्युत्पन्नस्य शब्दश्रवणे सति तदर्थबोधस्यावश्यकतया पश्चात् किमित्यनुमानप्रसर इति श्रोतॄणां स्वरसवाहिनमाक्षेपं स्वयमुद्भाव्यासौ समादधाति यस्य लेखनं, मन्ये, अत्र परिमितावकाशदानानर्हन्न भवति ।

नन्वर्थ एव प्रथमं पुंवाक्येभ्योऽवगम्यते ।
अन्यथा हि कथं वक्तुर्धीर्विशिष्टाऽनुमीयते ॥
अर्थेनैव विशेषो हि निराकारतया धियाम् ।
नच्चाप्रतीतेनार्थेन विशेषश्चावकल्पते ॥

अत्र ब्रूमोऽयथार्थत्वशङ्कयाऽर्थो न निश्चितः ।
अनिश्चितश्च न ज्ञात इति तावद्व्यवस्थितम् ॥
किन्त्वज्ञातेऽपि शब्दार्थे पदजाते श्रुते सति ।
विमर्शो जायते श्रोतुरीदृशो मतिशालिनः ॥
न कदाचिदसम्बद्धानर्थानेष विवक्षति ।
नवाऽप्रतीतसम्बन्धानिति दोषो न कश्चन ॥

प्रबन्धमेतावन्तन्निशम्य निशमयितारो मन्वीरन् यत् वेदशब्दो लौकिकाप्तशब्द इत्युभयप्रामाण्यं भाट्टेषु नैयायिकेषु च, उभयस्याप्यनुमानरूपतया पृथक् प्रामाण्यविरहञ्च वैशेषिकेष्वातिष्ठमानेषु, एकस्य पृथक् प्रामाण्यं अपरस्यानुमानत्वञ्च प्रतिपादयन्तः प्राभाकरास्तृतीयं पन्थानमनुविदधतीति ।

लडादिषु दशसु लकारेषु तिङ्प्रत्ययानां, कृतिः प्रयत्न इत्यन्यैरभिधीयमानाऽर्थभावना कौमारिलमतेऽर्थ इत्युक्तम् । अत्र प्राभाकरा लिङ्स्थले केवलमाख्यातस्य कृतिरर्थः नतु सर्वलकारस्थल इति पश्यन्ति । तथा लिङादिविधिप्रत्ययानां प्रवृत्त्यनुकूलव्यापाररूपा प्रवर्तना चोदना विधिरिति सामान्यतो व्यवह्रियमाणा शब्दभावनाऽर्थ इति भाट्टमते स्थिते तेषामपूर्वमर्थ इति प्राभाकरा मन्वते । अपूर्वस्यानुमेयत्वमभिदधानेषु न्यायमतानुरोधिषु, अनुमानस्य चिन्तापथातीतवैचित्र्यशालिनीषु जगति पुरुषमतिषु व्यवस्थानासम्भवेन ततोऽपूर्वसिद्धौ कामं शङ्कित्वा वेदवाक्यावगमाधीनश्रुतार्थापत्तिगम्यत्वं तस्य साधयत्सु कौमारिलेषु, ततोऽपि न सुप्रतिष्ठितमपूर्वं सेत्स्यतीति बिभ्यतो गुरुमतचिन्तकाः साक्षाच्छब्दवाच्यत्वं तस्याभि-

धातुमुपचक्रमिरे । वेदे एवं लिङ्प्रत्ययेनापूर्वाभिधानसम्भवेऽपि लोके कथं लिङ्प्रयोगः । न हि लौकिका अपूर्वं प्रतीत्य तत्तात्पर्येण विधिप्रत्ययान्प्रयुञ्जत इत्याक्षेपे लोके लक्षणया प्रयोग इति पण्डिता मन्यन्त इति तेषां समाधानसरणिः ।

अर्थापत्तौ भाट्टसम्मतां श्रुतार्थापत्तिममी नानुमन्यन्ते । इति प्रमाणविषये कियन्तं भेदं गुरुमतेऽपश्याम । अथेममधिकारमवसानं नेष्यन्तः प्रमेयव्यवस्थाविशेषं किञ्चिदभिदधीमहि । किञ्चिदेवत्वभिधातुं शक्यं यतो लब्धेऽप्येकास्मिन् ग्रन्थे प्रमेयनिरूपणपरं प्रकरणं विलुप्तम् ।

प्रसङ्गात् गुरुमते पदार्थेयत्तां कथयन्नारायणपण्डितो लिखितवान् ' यथाहुः प्राभाकराः---

' द्रव्यं गुणः कर्मच जातिशक्ती सादृश्यसङ्ख्ये समवाय एते
अष्टौ पदार्था इह तान्विभज्य सङ्क्षिप्य वक्ष्यामि गुरोर्मतेन।, इति

मन्ये प्रायेणैष प्रकरणपञ्चिकायां शालिकनाथस्य लुप्तप्रमेयपारायणान्तर्गतः श्लोकः स्यात् । अत्रैतन्मते न पूर्ववदाकाशादीनां प्रत्यक्षत्वं नापि वायोः । तमो न द्रव्यम् । शब्दोऽपि न द्रव्यम् । किन्त्वाकाशगुणः । मनसो न विभुत्वं । अपि तर्हि अणुत्वम् । नित्यस्तु संयोगो नास्तीति काममनिच्छन्तोऽपि पुनः कदाचिद्विस्तरेण मतमिदं प्रतिपादयितुं सामग्रीसम्पत्तिमन्तमवसरं भाविनमाशासानास्तिष्ठासामः ।



# अथ सेश्वरमीमांसाधिकारस्सप्तमः ॥

इत्थं गुरुकुमारिलदृष्टिभेदेन मीमांसासम्प्रदायप्रवाहस्य द्वेधा प्रवृत्तिरासीदित्यपश्याम । अद्यत्वे तस्य तदुभयविलक्षणेन प्रकारान्तरेणापि सम्भूतां प्रवृत्तिमधिकुर्महे ।

बाह्येषु सर्वथा वेदप्रामाण्यमपलपत्सु, वेदप्रामाण्यमङ्गीकृत्यापि वेदस्य पौरुषेयत्वं साग्रहं प्रसाध्य ईश्वरस्य वेदकर्तृत्वमातिष्ठमानेषु नैयायिकेषु, तत्प्रामाण्यमप्रकम्पं साधयितुमुद्युक्ताःमीमांसकाः, भिक्षुपादप्रसरन्यायेन, पौरुषेयत्वे तस्याभ्युपगते स पुरुष ईश्वरो न वेति बहुलं सन्देहमुद्भाव्य जगति धर्मप्रमाणस्य परे मूलघातं सृजेयुरिति पश्यन्तः, सर्वज्ञस्य पुरुषस्यैव कस्यचिदप्रमाणकः सद्भावोऽनपेक्षितश्चेत्यभिधातुमारभन्त । अत्र विषये उपर्युपरि खण्डनमण्डनेषु बहुलं प्रतायमानेषु, वस्तुतः सत्यामसत्यां वा इच्छायां मीमांसकैस्तावाननीश्वरवादः प्रकटनीयोऽभवत् यावता तेऽन्ततो निरीश्वरा इति नास्तिका इति बिरुदं प्रतिग्रहीतुं संञ्जातनिर्बन्धाः संवृत्ताः । एतदुपोद्बलकं विषयान्तरमप्येतैरंगीकृतम् शब्दमयी देवतेति । वेदवाक्यानां निपुणं पर्यालोचने यागोपयुक्तदेवतास्वरूपे शब्दस्याप्यन्वयोऽस्तीति स्फुटमेव प्रतिपद्यामहे । अत एव यत्र यो मन्त्रो विनियुज्यते तत्र तत्समानार्थकशब्दान्तरोच्चारणे न तत्फलसिद्धिरिति यथा शब्दप्रधाने वेदे मन्त्रशब्दस्वरूपं प्रयोगेऽवश्यापेक्षितं । तथा विधिघटकदेवतावाचकपदस्य स्वरूपमपि कर्मानुष्ठानकालेऽवश्यापेक्षितम । तद्यथा----'सौर्यं चरुन्निर्वपेद्ब्रह्मवर्चसकाम' इति वाक्यविहिते यागे 'सूर्यायेदं न मम' इत्येव त्यागः कार्यः । नत्वकार्यं आदित्याय चण्डरोचिषे इत्यादिप-

र्यायशब्दैरिति ।

अत्रास्त्येवेत्थमापातत आक्षेपस्यावकाशः--यदा विधिवाक्यं श्रूयते तदा लोकव्युत्पत्त्यनुसारेण तस्मिन् वाक्येऽन्येषां पदानामिव सूर्यादिपदस्याप्यशब्दात्मकः कश्चिदर्थः प्रतीयते । तस्यैवच तत्पदोत्तरं श्रुतेन तद्धितादिप्रत्ययेन देवतात्वमभिधीयत इति कथं शब्दस्य विधिगतस्य देवतास्वरूपघटकता--इति । तत्र मीमांसकानामुत्तरमिदम्! तत्रार्थस्य किंरूपं देवतात्वमिति विमर्शे यदि स प्रसिद्धेन्द्रादिलोकान्तरवृत्तिचेतनगतमनुष्यादिव्यावृत्तधर्मविशेषः तदा कर्मविशेषेषु विहितानामहोरात्रिसंवत्सरादीनां देवतात्वं नोपपद्यते । तस्मात् कर्मकाले शब्देन निर्देश्यत्वमेव देवतात्वमिति विज्ञायते । तत्र शब्दोच्चारणमन्तरा नान्येन केनचित्प्रकारेण पुरुषेण यागाङ्गभूता देवता सम्पादयितुं शक्यत इति पुरुषप्रवर्तकस्य विधेः तत्र शब्दोच्चारणमेव कर्माङ्गभूतदेवतात्वसम्पादनाय पुरुषकर्तव्यतया तात्पर्यविषय इति निर्धार्यते । एवं सति 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यत्र यद्यपि सूर्यपदार्थवृत्तिदेवतात्वनिरूपको यागः प्रथमं प्रतीयते, तथाऽपि तादृशार्थनिष्ठदेवतात्वस्य तद्वाचकशब्दोच्चारणमन्तरा पुरुषेण सम्पादयितुमशक्यतया प्रकृतकर्मानुष्ठानसम्पत्तये शब्दोच्चारणे कृते अर्थगतदेवतात्वस्य स्वयं सिद्ध्यतः पुरुषानपेक्षितत्वेन विधितात्पर्यागोचरत्वावधारणात् 'सूर्यशब्दमुच्चार्य यागं कुर्यात्' इत्येव तद्वाक्यार्थ इति निश्चिनुमह इति । एवञ्च इन्द्रादिशब्दार्थभूतदेवतासु मीमांसकानामनादरः । न वा केवलमनादरः! किन्तु पुराणादिप्रतिपादितरीत्या विग्रहादिमत्वं तादृशदेवतानामप्रामाणिकमित्यपि ते साधयन्ति।

यदि यागादिरूपेणाराधनेन स्वयं प्रतिगृहीतेन प्रसन्ना देवता फलमभीप्सितं ददातीति स्यात्तर्हि चेतनप्रसादस्यानियतोपायत्वात् कतिपयाङ्गवैकल्येऽपि पुरुषदैन्यादिवशात्प्रसभं प्रसादिता देवता फलिष्यतीति जनाः मात्रामात्रेणाप्यन्यथाभावरहितं कर्मानुष्ठातुं न श्रद्धधीरन्निति, यदि फलमीप्स्यते तर्हि यथोक्तं सर्वं साङ्गं तदुपायभूतं कर्मानुष्ठेयमिति श्रद्धासंवर्धनाय तेषामेवं प्रवृत्तिरिति तत्तात्पर्यमुन्नयन्त आशेरते ।

एवं तावदिमे वेदतदर्थप्रामाण्यपरिरक्षणैदम्पर्यवन्तोऽपि मीमांसकास्तदनुगुणं परिकरं विचिन्वानाः विहितनिषिद्धकर्मजन्यतद्वारभूतादृष्टतत्फलव्यतिरिक्तं किमप्यलौकिकं वस्तु नास्तीति ब्रुवाणाः नास्तिकाभिधानार्हन्तीमात्मनोऽनिच्छयाऽप्याकलयांबभूवुः ।

मतमिदमित्थं समर्थयन्तो मीमांसका भारतवर्षे केषांचिदास्तिकानां जुगुप्सापदमजायन्त । इदंवर्षाभिजनानां हि प्राचां 'वेदः' 'ईश्वरः' इति परममिदं तत्त्वद्वयम् । यस्यकस्यापि व्ययेन तदनपायं गोपायितुमनल्प उद्योगः, बह्वी भक्तिः समग्रधर्मप्रावण्यशालिनां निश्चितेदंलोकासारभावानांच तेषामविरतमासीत् । त इमे कथं बाह्यसमरमुखे वेदं रक्षितुं प्रवृत्य ईश्वरमपलपन्तं मीमांसकमरूक्षया दृशा वीक्षितुं सहेरन् । विदित्वाऽप्येवं कतिचित् मीमांसकानामीश्वरनिरसने न परमतात्पर्यमिति मन्यमानास्तत्र विषये उदासीना अभवन् । परंतु कार्यवशादपि कदाचिदेवमभ्यनुज्ञायमाने, काले कियति प्रसरति, सैव वासनाऽबाधमभिवर्धिता महतीं वैयाकुलीमाकलयिष्यतीति, परिहासहेतोरपि नेदृशः सिद्धान्ताभासो जनसमक्षं ख्यापनीय इति च मनसि कुर्वन्तः तत्प्रतिकूलं भाषितु-

मयतिषत । त इमे विशिष्टाद्वैतिनः । तत्र प्रकृते विशिष्याभिधानमालोचनाञ्चार्हति तत्रभवान् कवितार्किककेसरी वेदान्ताचार्यः सर्वतन्त्रस्वतन्त्र इति प्रसिद्धबिरुदावळीको वेङ्कटनाथः , यतस्तत्प्राचीनेषु विशिष्टाद्वैतमताचार्येषु विरुद्धस्थले मीमांसकमतं खण्डयित्वा वेदान्तार्थप्रतिपादनैदम्पर्येण स्वप्रबन्धानारचय्य जोषमास्थितेषु , अयमाचार्यो जैमिनीयानि मीमांसासूत्राण्येव साक्षात्स्वमतानुसारेण व्याख्यातवान् ।

अस्ति पश्यामः बहवो महान्तः बहुशास्त्राभिज्ञाः तत्तन्मतप्रतिपादनावसरे तत्तन्मतमितरनिरासपूर्वकं स्थापयन्तः तत्तन्मतानुसारिणो नाना निबन्धान् न्यबध्नान्निति । नैवमस्य सर्वतन्त्रस्वतन्त्रस्य प्रवृत्तिः । वेदान्ताचार्य इति स्वीयमाह्वानमन्वर्थयन्नसौ वेदान्तार्थैकपरिपालने बद्धकङ्कणो भवन् तद्विरुद्धपक्षभाजः प्रतिक्षेप्तुं प्रावर्तिष्ट । तत्रानेन नास्तिकमतसाधारणं तत्वमुक्ताकलापसर्वार्थसिद्ध्योः मतान्तरसामान्यनिरासे कृते वैदिकाग्रगण्यताप्रसिद्धिभाग्भ्यां गौतमजैमिनिभ्यां प्रवर्तितयोर्न्यायमीमांसयोः सामस्त्येन तिरस्कारमत्यन्तमनुचितमाकलयता विशिष्य तयोरुभयोरपि तन्त्रयोः बादरायणमतविपरीतार्थप्रतिपादनं व्याख्यातृभिरेव प्रवर्तकहृदयविसंवादि प्रवार्तितमिति प्रदर्शयता न्यायमीमांसासूत्राणि स्वमतानुगुणमनीयन्त । तदिदमुद्दिश्य प्रवृत्तो ग्रन्थः कवितार्किकसिंहस्य न्यायपरिशुद्धिरित्यभिधीयते । मीमांसार्थसमीकरणाय प्रवृत्तौ द्वौ ग्रन्थौ - एको मीमांसापादुका नाम अष्टषष्टिशतस्रग्धरात्मकः । अत्र तर्कपादस्थानि अष्टाप्यधिकरणानि व्याख्यातानि । प्रमाणप्रमेयसम्बन्धिनो विचारस्य तर्कपादगतत्वात् तदंशे त्रय्यन्त-

विदामाशयानुरोधेन शिक्षणे प्रवृत्ता मीमांसापादुका तर्कपादमात्रं व्याख्याय विरमतीति भाति । अपरस्तु ग्रन्थः कृत्स्नस्यापि जैमिनिसूत्रजातस्य अक्षरार्थवर्णनेऽपि व्यापृतः सेश्वरमीमांसाभिधानः ।

यदत्र, विषयेषु साक्षान्मीमांसकानां मतमपेक्ष्य वैलक्षण्यं तदिदानीं यच्च यावच्च प्रतिपादयितुमपारयन्तोऽपि कतिपयान् विषयान् संस्पृश्याधिकारमिमं संस्थापयेम । सेश्वरमीमांसेति ग्रन्थनामैव तावदिदं अत्रेश्वराङ्गीकारं विशेषमावेदयति । मीमांसका हि, उक्तरीत्या नैयायिकसाधितं वेदस्येश्वरकर्तृकत्वेनानित्यत्वं परिजिहीर्षवो वेदस्वरूपे तत्प्रामाण्ये वा ईश्वराभिधानस्य पुरुषविशेषस्यानपेक्षां प्रदर्श्य तदसद्भावमपि प्रत्यपादयन् । सेश्वरमीमांसकाः पुनः, अस्तु कामं, अस्ति च वस्तुतः, ईश्वरो नाम सर्वशक्तः सर्वज्ञस्स पुरुषः, अथापि स यथा नित्यस्तथा वेदाभिधानः शब्दराशिरपि, नतु पुनरेतस्य तत्कर्तृकत्वे प्रमाणं पश्याम इति नैयायिकान् प्रतिवदन्ति ।

अङ्गीकृते ईश्वरसद्भावे, वेदेषु लिङादिविधिप्रत्ययैरभिधीयमानोऽर्थः किंरूप इत्यत्र यद्बहवो बहुधा मन्यमानाः--केचिदिष्टसाधनत्वमिति, एके बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वसहितं तदिति, परे नियोगाख्यमपूर्वमिति, इतरे शब्दभावनेति—तत्तत्साधने सुबहु परिश्राम्यन्ति, तत्रापि लौकिकं पन्थानमनुरुध्य समुचितं समाधानमभिहितं भवति । तदात्वे हि ईश्वराज्ञैव वैदिको विधिः । इदमाह सेश्वरमीमांसा —चोदनेति विधिनिषेधात्मकः श्रौतो विध्युद्देशः संगृह्यते । स हि ईश्वराज्ञारूपतया प्रवृत्तिनिवृत्तिरूपपुरुषव्यापारप्रयोजकत्वात्तदाकारविवक्षया चोदनेत्युच्यते । तदाच शाबरमुत्स्वप्नायि-

तम् । आह च भगवांश्चोदकः स्वयमेव-श्रुतिः स्मृतिर्ममैवाज्ञेति ।

न केवलं सर्वेश्वरमेकमेव; किन्तु तत्तद्यागोद्देश्यभूता इन्द्राग्न्यादिदेवता अपि वस्तुतो विद्यमाना अङ्गीकरोति सेश्वरमीमांसा । यागो नाम देवताऽऽराधनम् । आराधिता देवता प्रसीदति । तथा यथाऽभिमतं फलं स्वयं पुरुषस्य सम्पादयति । नतु पुनस्तत्तच्छब्दमात्रगुणकेन कर्मणा अपूर्वं ततः फलमिति युक्तम् । देवताविशेषतद्गुणतत्प्रसादादिकं प्रतिपादयन्तोहि तदा मन्त्रार्थवादभागा नोपपद्येरन्नित्येतन्मतम् । तदिदमाह—“इदञ्च सर्वं शारीरकदेवताधिकरणे भाष्यकारैरेव स्पष्टमुक्तमिति तदेवात्र लिख्यते:– कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि ‘वज्रहस्तः पुरन्दरः’ ‘तेनेन्द्रो वज्रमुदयच्छदि’त्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव । नचानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुम् । स्तुत्याद्युपयोगित्वात् । तेन विना तत्वाद्यनुपपत्तेश्च । गुणकथनेन हि स्तुतित्वम् । गुणानामसद्भावे स्तुतित्वमेव हीयेत । नचासता गुणेन कथितेन प्ररोचना जायते । अतः कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः । मन्त्राश्च कर्मसु विनियुक्तास्तत्र तत्र किञ्चित्करत्वायानुष्ठेयमर्थं प्रकाशयन्तो देवतागतविग्रहविशेषमभिदधत एव तत्र किञ्चित् कुर्वन्ति । अन्यथेन्द्रादिस्तुत्यनुपपत्तेः । न च निर्विशेषा देवता धियमधिरोहति । तत्र प्रमाणान्तराप्राप्तान् गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति गुणविशिष्टं वा प्रकाशयन्ति । प्राप्तांश्चानूद्य तैः कर्मप्ररोचनप्रकाशने कुर्वन्ति । विरुद्धत्वे तु तद्वाचिभिः शब्दैराविरुद्धान् गुणान् लक्षयित्वा कुर्वन्ति । कर्म-

विधेश्च देवताया ऐश्वर्यमपेक्षितमेव। कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेः साधनमपेक्षते। मन्त्रार्थवादयोश्च वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति, यदनेन हविषाऽऽशास्ते तदस्यास्तदृध्यात् तदस्मै देवा रासन्तामित्यादिषु देवतायाः कर्मणाऽऽराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं अपेक्षितत्वेन वाक्यार्थे समन्वीयते" इति। वेदार्थसंग्रहेऽप्युक्तम्—'सर्वो ह्यर्थवादभागो देवताराधनभूतयागादेस्सा[illegible]स्याराध्यदेवतायाश्चादृष्टरूपान्गुणान् सहस्रशो वदन् कर्मणि प्राशस्त्यबुद्धिमुत्पादयति। तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यादिति कर्मणि प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयतीत्यनयैव दिशा सर्वे मन्त्रार्थवादगता ह्यर्थास्सिद्धा' इति।

इत्थमयमीश्वरदेवताऽभ्युपगमानुपाती विशेषः। एवं सति नवमेऽध्याये देवताधिकरणे देवतानां कर्मणि गुणत्वं केवलं नतु तत्प्रसादसिद्धये कर्माराध्यत्वं कर्मैव तु द्रव्यदेवताभ्यां सम्पादितात्मलाभमदृष्टं द्वारीकृत्य फलं जनयतीति यत्साधितं जैमिनिना तत्र विरोधं परिहरन्तः सेश्वरमीमांसका ब्रुवते—'भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनाय। अश्रुतवेदान्तानां कर्मण्यश्रद्धा माभूदिति देवताधिकरणेऽतिवादः कृतः'।

एवमिमे बादरायणमतेनाविरोधं सम्पादयन्तो बहुष्वधिकरणेषु मीमांसासूत्राणि प्रकारान्तरेण व्याचक्षाणाः शबरकुमारिलव्याख्यानानि तिरयन्ति। [1]मनुपतञ्जलिप्रभृतीनां मतेनैते प्रत्यक्षानुमानागमान् त्रीणि प्रमाणानि सम्मन्यन्ते नाधिकानि। प्रमेयविषये पुनः

शुद्धवैदिकानामेतेषां तथा महीयानन्यथाभावः यथाऽत्र तत्सर्वं प्रति पादयितुमुपक्रममाण उपेक्षापदं भवेयम् ।

इति सेश्वरमीमांसाधिकारस्सप्तमः ॥

---

# अथ सङ्कर्षाधिकारोऽष्टमः ।

एवं जैमिनीयानां द्वादशानामध्यायानां सम्बन्धिनि पर्यालो च्चने एतदवधि व्यापृतमस्माभिः । अथत्वे मीमांसात्वेन प्रसिद्धिम धिगतमपरं ग्रन्थसन्दर्भं प्रति विमर्शका नीयन्ते ।

मीमांसाशास्त्रं प्रस्तुत्य प्रपञ्चहृदये लिखितम्:— तदिदं वि शत्यध्यायनिबद्धम् । तत्र षोडशाध्यायनिबद्धं पूर्वमीमांसाशास्त्रं पू काण्डस्य ( उपनिषद्भिन्नवेदभागस्य ) धर्मविचारणपरं जैमिनिकृतम् तदन्यदध्यायचतुष्कमुत्तरमीमांसाशास्त्रमुत्तरकाण्डस्य ( उपनिषद्भा गस्य ) ब्रह्मविचारपरायणं व्यासकृतम् । इतः प्रतीमः यदिदं वेद न्त इति, उत्तरमीमांसेति, शारीरकमीमांसेति ब्रह्ममीमांसेति बहु कीर्त्यमानं बादरायणीयं ब्रह्मसूत्रजातं तस्यापि जैमिनीयवन्मीमां शास्त्रैकदेशभूतत्वात् सत्यपि भिन्नकर्तृकत्वे मीमांसेति विंशत्यध्य यात्मकमेकमेवेदं शास्त्रमिति । इदमित्थमङ्गीकुर्वन्ति विशिष्टाद्वैतिन अद्वैतिनः पुनराक्षिपन्ति । एतन्मतद्वयावलम्बिनोरत्र विषये न इय तावान् विवादः । [१] मीमांसेत्येकमेतच्छ्रुतिविषयनयस्तोमसंग्र शास्त्रम् । [२] 'मीमांसायाः कबन्धं कतिचन जगृहुः राहुकल्पं शि न्ये, इत्येकेषां सिद्धान्तावष्टम्भनिगर्वः । '........ [३] जाग्रति न विदुषां लभते पदमेकशाखयबालोऽपि ' इत्यपरेषाम् ।

अस्तु तावदिदमेवं वा तथा वा । वयन्तु नेपदपि बादर

णीयशास्त्रेण प्रकृते सम्बन्धवन्त इति तद्विमुञ्चामः । गृह्णीमस्तु शिष्टां षोडशाध्यायीम् । तत्रापि प्रथमतो द्वादशाध्यायान् प्रति ' मन्ये, विदितश्च: यद्विमर्शकदृशा वेदितव्यम् । अन्ये पुनश्चत्वारोऽध्यायाः प्रकृताधिकारस्य विषयीभवन्ति ।

एषामपि कर्ता भगवान् जैमिनिरिति बहवः । केचिल्लिखन्ति काशकृत्स्न इति [4] । अत्रान्यतरावधारणमस्मच्छक्तिमतीत्य वर्तत इति प्राञ्च एवाशेरते [5] । अस्ति पुनरभ्यूहितुमवकाशः काशकृत्स्नेन कृत एको देवताकाण्डः जैमिनिना चापर इति देवताकाण्डद्वयमासीदिति [6] । एतैश्चतुर्भिरध्यायैस्तत्तत्कर्माभिराराधनीयानां देवतानां स्वरूपादिकं विचार्यत इति कथयन्ति । अत एव एकोद्देशेन प्रवृत्ततया चतुरध्यायीयं देवताकाण्ड इति पृथगाख्यायते । न जानीमः कस्येदं दौर्भाग्यं यद्विंशत्याऽध्यायैरवयविन्या मीमांसायाः प्रथमचरमयोः कर्मब्रह्मकाण्डयोः शबरशङ्करप्रभृतिभिरत्यन्तमभिवृद्धिमवापितयोः, मध्यमोऽयं देवताकाण्डः, यथा चिराय सावधानमन्विष्यतामपि दृष्टिगोचरतामासादयेत् , तथा क्वचिन्निलीनः, अथवा विलीन इति ।

बहुत्र सुबहु विचार्यापि नास्माकमेतत्सूत्रपाठो मिळति । केषुचित् प्राचां ग्रन्थेषु परमुदाह्रियमाणानि कतिपयानि—पञ्चषाणि सूत्राणि विज्ञायन्ते [7] । यदि प्रपञ्चहृदयं प्रमाणं तदा बोधायनोपवर्षदेवस्वामि*भवदासैः देवताकाण्डस्य चत्वारि भाष्याणि व्यधायिषत यान्यद्यत्वे मूलभूतैस्सूत्रैस्समानोदन्तानीति नो मन्तव्यं भवति । एवमेतेषु चतुर्षु भाष्येषु वृत्तेषु, आह प्रपञ्चहृदयं, शबर आदितो द्वाद-

* उपदेशो वा आख्याशब्दो हि नाकस्मात् (जै. 3. 2. 11.) इतितु कृत्वा चिन्तेत्युक्तं तद्भाष्ये देवस्वामिभिः इति कुतूहलवृत्तिकारोऽपि (288 पु.)

शाध्यायीं व्याख्याय द्वितीयं काण्डमुपेक्षाञ्चक्रे । अनन्तरं सङ्कर्षो नाम कोऽपि तस्य भाष्यमभाषिष्टेति । यद्येवं सङ्कर्षकाण्ड इति नाम्नोऽपि कथञ्चिदुपपत्तिः कल्पिता भवति । एतदपि तु भाष्यं नाममात्रेण नः प्रपञ्चहृदयं समर्पयति ।

एतत्काण्डविषयप्रतिपादनपरो न कोऽपि ग्रन्थो जगति साम्प्रतं वर्तत इति कथयेयं यदि न स्यात् भाट्टचन्द्रिकेति निबन्धनमेकं भास्करमिश्रप्रणीतं यत्र प्रत्यधिकरणमाद्यसूत्रस्य द्वित्राक्षरानधिकं प्रतीकमुपादाय भीतभीत इव बहुत्वरया धावमानः क्वचित्क्वचिद्भाष्यं किमपि प्रमाणयन्निव, असमग्रावयवमनिश्चितन्यायविशेषमधिकरणजातं वर्तयति ग्रन्थकारः ।

एवन्तया समाचारस्य, विशेषं किमपि तत्र कथयितुमनीशानाः प्रपञ्चहृदयोक्तमध्यायार्थं केवलमनुसन्धाय तिष्ठम । तत्रेदमुक्तम् :– 'तथा देवताकाण्डस्य प्रथमाध्याये सर्वेषां मन्त्रविशेषाणां देवतातत्त्वप्रदर्शने तात्पर्यमिति प्रदर्शितम् । द्वितीयेऽध्याये विद्ध्यर्थवादनामधेयानां मन्त्रदेवताविषयत्वम् । तृतीयेऽध्याये देवतातत्त्वं स्वेच्छाविग्रहवत्त्वादिगुणगणालंकृतम् । चतुर्थाध्याये देवता (?) फलं सत्कर्मणां अपवर्गाधिकारिणः तादात्म्यलक्षणापवर्गफलमिति' । श्रीमद्वेङ्कटनाथस्य कुमारो वरदाचार्यः पुनः स्वीयेऽधिकरणसारावलीव्याख्यानेऽधिकरणचिन्तामणौ देवताकाण्डाध्यायचतुष्टयस्यार्थमेवमाह—

स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम् । फलं च देवताकाण्डे देवतानान्तु कथ्यते । इति ।

इति सङ्कर्षाधिकारोऽष्टमः ।

# अथ प्रयोजनाधिकारो नवमः ।

अथेदानीं मीमांसादर्शनप्रयोजनं प्रति किञ्चिदभिधातुं चरमोऽयमधिकारोऽधिक्रियते ।

यदुद्दिश्य प्रवृत्तिस्तत्प्रयोजनमिति न्यायविदां भणितम् । विदितन्नः वेदार्थावधारणमुद्दिश्य मीमांसाशास्त्रं प्रवृत्तमिति । एवं चेत् वेदार्थावधारणं मीमांसाशास्त्रस्य प्रयोजनमिति विना वाचं सिद्ध्यति । अत्र पार्थसारथिः—धर्मस्यैवेह भेदाभेदादिविचारः शास्त्रे चिन्त्यते श्रौतस्य स्मार्तस्य वा न श्रौतस्यैव..................तस्माद्धर्म इत्येव शास्त्रविषयो न वेदार्थ इति । तथाच दर्शितं (कुमारिलेन) 'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनं' इति....। एवमयं न वेदार्थावधारणं किन्तु धर्मावधारणं मीमांसायाः प्रयोजनमित्याह । प्राभाकराणां मतं वेदार्थावधारणमेवेति । प्रायेण सर्वे प्रौढाः शास्त्रान्तरकारा अपि तथैव तत्र तत्र व्यवहरन्ति । कुमारिलोऽपि 'धर्मे प्रमीयमाणे तु वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति, इति ब्रुवन्वेदार्थावधारणप्रयोजनकतामेव मीमांसाया अभिसन्दधातीति प्रतीमः । अत एव वेदस्यैवोपाङ्गं मीमांसा। नतु स्मृतेरपीति युक्तं भवति । एवन्तु सति स्मृत्यादिप्रामाण्यप्रतिपादनं मीमांसायामसङ्गतं स्यादिति पार्थसारथिर्मन्यते । तत्र वेदवाक्यानि प्रत्यक्षानुमितभेदेन द्वैधं भवन्ति । तेष्वनुमितवाक्यानां प्रामाण्यमनुमापकप्रामाण्यमन्तरा दुःस्थितमिति कथङ्कारमसाङ्गत्यं स्मृत्यादिप्रामाण्यस्येति यद्यभिधीयेत नेदं दुरुत्तरमिति शक्यं वक्तुम् । सर्वथा तावत् धर्माभिधानेऽलौकिकेऽर्थेप्रतिपत्तव्ये तत्प्रतिपादकानां एषोऽर्थः प्रामाणिको ग्राह्यः एष नेति विवेकद्वारा तदवधारणं मीमांसाशास्त्रस्य प्रवर्तकं मुख्यप्रयोजनमिति सुनिश्चितमिदम् ।

एवं सत्यस्मिन् वेदवाक्यार्थावधारणरूपे मुख्यप्रयोजने, अवैदिकान्यपि यानिच यावन्तिच सन्दिह्यमानार्थानि प्रमाणवाक्यानि तानिच तावन्तिच मीमांसान्यायसञ्चारणेन विनिश्चितार्थानि भवन्तीति मीमांसाया इदमन्यदानुषङ्गिकं फलम्। जैमिनिरेव स्वयमेकाधिकरणन्यायमपराधिकरणे सञ्चारयति। बादरायणोऽप्युत्तरमीमांसायां पूर्वमीमांसान्यायानुदाहरति। तथा प्राक्तना अद्यतनास्सर्वे वैयाकरणाश्च नैयायिकाश्च तानिमान् न्यायान् स्वस्वग्रन्थेषु बहुळमुपयुञ्जते [1]।

इदन्तु सुप्रसिद्धं यद्धर्मशास्त्रप्रबन्धारस्सर्वेऽपि मीमांसान्यायसंचारमंतरा न किंचिल्लिखन्तीति। एवं सामान्यतः सर्वप्रमाणवाक्यार्थावधारणप्रयोजनिकायां मीमांसायां न सर्वेऽधिकरणन्यायाः तादृशोपयोगभाजो भवन्ति। पदार्थकथनमात्रेणापि, लक्षणाभिधानमात्रेणापिहि कतिचिदधिकरणाणि सन्तिष्ठन्ते। क्वचित्पुनर्विशिष्य सूत्रकारः स्वयं वैदिकविषयविशेषं कीर्तयन् तन्मात्रावधारणपर्यवसाय्यधिकरणं वर्तयति। तथा कानिचिदधिकरणानि न वाक्यं किन्तु अर्थविशेषं विषयीकुर्वन्ति।

तदत्र समस्ति परिपूर्णोऽवकाशः केऽर्थविषया न्यायाः के वाक्यविषयाः तत्रापि साक्षात्प्रतिपादितान् विना ध्वनिता भाष्यकारादिभिस्सञ्चारिताः के कति। तथा सूत्रेषु बहुत्र 'लोक'वदिति उदाह्रियमाणानां किमाकारकत्वं किम्मूलकत्वमित्यादि विमृश्य सविस्तरं विवेक्तुम्। अस्माभिस्तु ऐषमः सामान्यतो मीमांसां प्रति कियति समालोचनं प्रयतितवद्भिरत्रेदानीं स्थातव्यम्॥

इति प्रयोजनाधिकारो नवमः॥

---

इति मीमांसाऽभ्युदयः।

# अनुबन्धः प्रथमाधिकारः ।



1· अत्रेमाः न्यायाचार्यस्योदयनस्य कुसुमाञ्जलिस्थाः ङ्क्तयः ( काशीचौखांबामुद्रणे प्रथमस्तबके ३४ पुटे ) समालोनमर्हन्ति--

विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥

यदि हि पूर्वपूर्वभूतपरिणतिमात्रमेवोत्तरोत्तरनिबन्धनं ( बौद्ध णिकवादिमतेन आत्मविषये ) न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रतेंत । नहि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी र्त्तते , प्रागेव तु जगत् । लाभपूजाख्यात्यर्थमिति चेत् लाभादय किन्निबन्धनाः ? न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः । यतो ऽनेन लब्धव्यं योवैनं पूजयिष्यति स किमर्थम् ? ख्यात्यर्थमनुरार्थं च , जनो दातरि मानयितरि च रज्यते , जनानुरागप्रभवा सम्पद इति चेत् न , नीतिनर्मसचिवेष्वेव तदर्थं दानादिव्यवापनात् ।

त्रैविद्यतपस्विनो धूर्तबका एवेति चेन्न , तेषां दृष्टसम्पदं प्रनुपयोगात् । सुखार्थं तथा करोतीति चेन्न , नास्तिकैरपि तथा णप्रसङ्गात् । सम्भोगवत् लोकव्यवहारसिद्धत्वात्। अफलमपि क्रि- , वेदव्यवहारासिद्धत्वात् सन्ध्योपासनवदिति चेत् गुरुमतमेतन्न

---

एवमत्र छेदः कर्तव्य इति श्रीमद्भिः S· कुप्पुस्वामिशास्त्रिपादैरुपदिष्टोऽस्मि ।

गुरोर्मतम् । ( सन्ध्योपासनस्य अफलत्वं प्रभाकरमते न पुनरस्मद्गुरु-सम्मतमिति ) वृद्धैर्विप्रलब्धत्वाद् बालानामिति चेन्न, वृद्धानामपि प्रवृत्तेः । न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते । तेऽपि वृद्धतरैरित्येवमनादिरिति चेत् न तर्हि विप्रलिप्सुः कश्चिदत्र यतः प्रतारणशङ्का स्यात् । इदंप्रथम एव कश्चिदनुष्ठायापि धूर्तः पराननुष्ठापयतीति चेत् किमसौ सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति । कथञ्चैनमेकं प्रेक्षापूर्वकारिणोऽप्यनुविदध्युः ? केन वा चिह्नेन अयमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः । न ह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः ।

यतः पाषण्डाभिमतेष्वप्येवं दृश्यत इति चेन्न, हेतुदर्शनादर्शनाभ्यां विशेषात् । अनादौ चैवंभूतेऽनुष्ठाने प्रतायमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात् । न त्वनुष्ठानगोचरेण कर्मणा । अन्यथा प्रमाणविरोधमन्तरेण पाषण्डत्वप्रसिद्धिरपि न स्यात् ।

2. एतैः पुराणादिभिश्चतुर्दशभिर्विद्यास्थानैरुपबृंहिताया विद्याया ग्रहणेऽधिकारिविशेषः शाखान्तरगतैश्चतुर्भिर्मन्त्रैरुपदर्शितः । तांश्च मन्त्रान् यास्क उदाजहार [ यास्कनिरुक्ते द्वितीयाध्याये प्रथपादे सप्तमखण्डे ] अत्रायं प्रथमो मन्त्रः । —

विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥

विद्याभिमानिनी देवता ब्राह्मणमुपदेष्टारमागत्य एवं प्रार्थयामास--हे ब्राह्मण मामनधिकारिणेऽनुपदिश्य पालय । तवाहं निधिवत् पुरुषार्थहेतुरस्मि । तादृश्यां मयि मदुपदेष्टरि त्वयि च योऽसूयां करोति, यश्चार्जवेन विद्यां नाभ्यस्यति, योऽपि स्नानाचमनाद्याचारनियतो न भवति तादृशेभ्यः शिष्याभासेभ्यो न मां ब्रूयाः तथा सति त्वद्धृदये स्थित्वा फलप्रदा भवेयम् ।

अथ द्वितीयो मन्त्रः—

य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं सम्प्रयच्छन् ।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्च नाह ॥

पूर्वस्मिन् मन्त्रे आचार्यस्य नियममभिधायास्मिन् मन्त्रे शिष्यस्य नियमोऽभिधीयते । वितथमनृतमपुरुषार्थभूतं लौकिकं वाक्यं तद्विपरीतं सत्यं वेदवाक्यमवितथम् । तादृशेन वाक्येन य आचार्यः शिष्यस्य कर्णावातृणत्ति सर्वतः तर्दनं पूरणं करोति उपसर्गवशादौचित्याच्च तृणत्तिधातोरर्थान्तरे वृत्तिः । सर्वदा वेदं यः श्रावयतीत्यर्थः । किं कुर्वन् अदुःखं कुर्वन् मन्दप्रज्ञस्य माणवकस्य आदावर्धर्चमृचं वा ग्रहीतुमशक्तस्य यथा दुःखन्न भवति तथा पादं पादैकदेशं वा ग्राहयन् । किञ्च अमृतं सम्प्रयच्छन् अमृतत्वस्य देवत्वजन्मनो मोक्षस्य वा प्रापकत्वादमृतं वेदार्थः तस्य प्रदानं कुर्वन् । तं तादृशमाचार्यं सन् शिष्यः मुख्यमातापितृरूपं मन्येत । पूर्वसिद्धौ तु मातापितरौ अधमस्य मनुष्यशरीरस्य प्रदानादमुख्यौ । तस्मै मुख्यमातापितृरूपायाचार्याय एकमपि द्रोहं न कुर्यात् ।

अथ तृतीयो मन्त्रः—

अध्यापिता ये गुरुन्नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीयाः तथैव तान्न भुनक्ति श्रुतं तत् ॥

येत्वधमा विप्रा गुरुणाऽध्यापिताः सन्तः, विनयोक्त्या तदीयहितचिन्तनेन शुश्रूषया वा गुरुन्नाद्रियन्ते आदररहितास्ते शिष्याभासा गुरोर्न भोजनीया अनुभवयोग्या न भवन्ति । न हि तेषु गुरुः कृपां करोति । यथैव ते गुरुणा न पालनीयाः तथैव तानधमान् शिष्यान् तच्छ्रुतं गुरूपदिष्टं वेदवाक्यं न पालयति । फलप्रदं न भवतीत्यर्थः ।

अथ चतुर्थो मन्त्रः—

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्च नाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥

हे आचार्य यमेव मुख्यशिष्यं शुचित्वादिगुणोपेतं जानीयाः, किञ्च यो मुख्यशिष्यस्तुभ्यं कदाचिदपि न द्रुह्येत् तस्मै तु मुख्यशिष्याय त्वदीयनिधिपालकाय हे ब्रह्मन् वेदरूपां मां विद्यां ब्रूयाः । इत्थं विद्यादेवतया प्रार्थितत्वादाचार्येण मुख्यशिष्याय वेदविद्योपदेष्टव्या । [ ऋग्वेदविद्यारण्यभाष्योपोद्धातान्ते ] एते मन्त्राः छान्दोग्यब्राह्मणगता इति मनुस्मृतौ 2—114 श्लोकव्याख्याने कल्लूकभट्ट आह ।

3. सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परन्नास्ति न दैवं केशवात् परम् ।

**श्रीविष्णुनामसहस्रपारायणेऽन्ते पठ्यमानमिदं महाभारतस्थमिति बहव उदाहरन्ति । तदिदमनुसन्दधानो वेङ्कटनाथः**

स्वीये सङ्कल्पसूर्योदये प्रथमाङ्के कथयति ।

शास्त्राण्यालोड्य सर्वाण्यशिथिलगातिभिर्युक्तिवर्गैर्विचार्य
स्वान्तर्निर्धार्य तत्वं स्वभुजमपि महत्युद्धरन् सूरिसङ्घे ।
सत्यं सत्यञ्च सत्यं पुनरिति कथयन् सादरं वेदवादी
पाराशर्यः प्रमाणं यदि क इह परः केशवादाविरस्ति ।

4. सर्वेषान्तु स नामानि कर्माणि च पृथक् पृथक्
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे । मनु-1—21
यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।

5. तस्मात्स्वाध्यायोऽध्येतव्यः । तै-आ-2 प्रपा-15 अनु.

6. अनधीयाना व्रात्या भवन्ति। [ मीमांसकैरर्थवादाधिकरणे
[ उदाहृतम्

योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ मनु 2-168

7. यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागोऽस्ति।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ।

[ यः परमार्थोपदेशकत्वेन सखायं , स्वपालयितृत्वेनाध्येतारं स्वसखित्वेन जानन्तं वेदं त्यजति न तस्य वाचि ग्राह्योंशः कश्चिदस्ति । यदयं त्यक्तवेदः पुरुषः वेदातिरिक्तं शृणोति वृथा तच्छृणोति यतस्स न सुकृतस्य पन्थानं वेद ] ऋग्वेद 8 अष्ट. 2 अध्या. 24 वर्ग. 6 ऋक् .

तदिदं विपर्यासलवेन तैत्तिरीयारण्यके श्रूयते ।

तं योऽनूत्सृजत्यभागो वाचि भवति । अभागो नाके

भवति तदेषाभ्युक्ता यस्तित्याज सखिविदं सखायम्। तै. आ 2 प्रपा. 15 अनु।

8. स्थाणुरयं भारहारः किलाभूदधीत्य वेदन्न विजानाति (योऽर्थम्।

योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा।

यदधीतमविज्ञातं निगदेनैव शब्द्यते

अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्।

[यास्कनिरुक्ते पूर्वषट्के 1 अध्या. 6 पाद. 2 खण्ड.]

उतत्वः पश्यन्न ददर्श वाचं उतत्वः शृण्वन्न शृणोत्येनाम्।

उतोत्वस्मै तन्वं विसस्रे जायेव पत्या उशती सुवासाः॥

['अपि खल्वेकः पश्यन्नपि' वेदवाचं 'न पश्यति'। 'अपि खल्वेकः शृण्वन्नपि न शृणोति'। अङ्गोपाङ्गाधिगमजनितव्युत्पत्तिसम्पन्नाय तु आत्मनस्तनुं विवृणुते यथा कामयमाना पत्नी पत्ये विवृणुते सुवासाः] ऋग्वे. 8 अष्ट. 2 अ. 23 व 4 ऋ.

9. पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्

आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः।

[महाभारत इति मनुप्रथमश्लोकव्याख्याने भट्टकुल्लूकराघवानन्दौ]

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।

यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ मनु-12—106.

10. इहहि द्विजानां वेदाभ्यासः सकलपुरुषार्थसिद्धेः कारण-

11. मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ।
पाणिनीयशिक्षा 52 श्लो.

12. अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः
धारिभ्यो ज्ञानिनः श्रेष्ठाः ज्ञानिभ्यो व्यवसायिनः।मनु-12·103

पुस्तकेषु च या विद्या परहस्तेषु यद्धनम्
सङ्ग्रामे च गृहे सैन्यं त्रयः पुंसां विडम्बनाः॥ सुभाषितरत्नभाण्डागारे -- 165 पुटे 269 श्लोकः

पुस्तकस्था तु या विद्या परहस्तगतं धनम्
कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम्॥ तत्रैव 168 पु. 413 श्लोकः

13. प्रकृतिर्यस्य कल्याणी दन्तोष्ठौ यस्य शोभनौ ।
प्रगल्भश्च विनीतश्च स वर्णान् वक्तुमर्हति ॥
सुखार्थी चेत्त्यजेद्विद्यां विद्यार्थी चेत्त्यजेत्सुखम्
सुखिनस्तु कुतो विद्या सुखं विद्यार्थिनः कुतः ।
हयानामिव जात्यानामर्धमात्रार्धशायिनाम्
न हि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ।
न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः
गद्गदो बद्धजिह्वश्च न वर्णान् वक्तुमर्हति ।
याज्ञवल्क्य शिक्षा 2 पुटे.



# अथ द्वितीयाधिकारानुबन्धः ।



1. तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदः शीक्षा
कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति
मुण्डकोपनिषदि प्रथम खण्डे

तस्यैतस्य महतो भूतस्य निश्वसितमेवैतत् ऋग्वेदो यजुर्वेदः सामवेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविचितं ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि (सुबालोपनिषत्-द्वितीयखण्डोपक्रमे ।)

2. वेदे व्याकरणादीनि सन्त्येवाभ्यन्तराणि नः ।
भवेद्वा तदभिप्राया षडङ्गाध्ययनस्मृतिः ॥
तन्त्र वा 208 पु ॥

3. विशये प्रायदर्शनात् । 2. 3. 16. ॥

4. सहोवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि । (छान्दोग्योपनिषत्-सप्तमप्रपाठकोपक्रमे )

5 The History of Indian Literature Page 121.

6. कल्कत्तामुद्रणे (1872) 30 पुटे.

7. पूजितविचारवचनो मीमांसाशब्दः ।

[ भामत्यां प्रथमसूत्रे वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्ये-
दमादिमं सूत्रमिति भाष्यव्याख्यानावसरे । ]

8. प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपादिश्येत तच्छास्त्रमभिधीयते ॥

406 पु. श्लोकवार्तिकम् ।

9. There is little room for real philosophy in all this. But there are questions such as that of Dharma or Duty including sacrificial duties which offer an oppurtunity for discussing the origin and the nature of its rewards, while in accounting for seeming contradictions and in arriving at general principles concerning sacrificial acts, problems would naturally turn up which, though often in themselves valueless, are generally treated with considerable ingenuity. In this way the work of Jaimini secured for itself a place by the side of the works ascribed to Badarayana, Kapila and others and was actually raised to the rank of one of the classical philosophies of India.

199 p. Six systems of Indian philosophy.

10 धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥ कुमारिलभट्ट-
स्येति कुल्लूकभट्टः । मनु-12-109 व्याख्या.

11 यथा दर्शपूर्णमासयागप्रकरणे एकादशर्चः ' देवे-

न्तिमयोस्त्रिरावृत्तिं विधाय 'ताः पञ्चदश सम्पद्यन्ते' इति पञ्च-दशत्वसङ्ख्याऽनूद्यते ।

12. It is more difficult to determine where and when the Vedangas were first mentioned as six.

P. 57 Maxmuller's Ancient Sanskrit Literature.

13. भाष्यस्य च तद्विवरणरूपस्य शास्त्रशरीररूपतया न शास्त्राधिक्यं मन्यते मीमांसाया इव वेदात् ।

न्यायवार्तिकतात्पर्यपरिशुद्धिः 11 पु.

व्याकरणाधिकरणपूर्वपक्षे 'विधिर्विधेयस्तर्कश्च वेदः' इति यत्रकुत्रत्यां स्मृतिं मन्त्रब्राह्मणमीमांसानां वेदत्वमित्येवंपरतयोदाहरति भट्टकुमारिलः ।

---

## अथ तृतीयाधिकारानुबन्धः ।



1. (25 पु. 9. पङ्क्ति)

तदिदमनूद्य स्वयं निराचकार किशोरि लाल् सर्कार् M. A., B. L, स्वीये The Mimamsa Rules as applied to Hindu Law इति निबन्धने—

Anyhow the theory which Sir Jhon Edge accepted in his judgement in the case of *Bani Prasad, Hardai Bibi* that Jaimini lived in the thirteenth century of the Christian era and that he

was consequently subsequent in date to the Mitakshara is certainly incorrect.

2. All this is very discouraging to students accustomed to chronological accuracy but it has always seemed to me far better to acknowledge our poverty and the utter absence of Historical dates in the literary History of India than to build up systems after systems which collapse on the first breath of criticism or scepticism,

P 121 Six systems of Indian philosophy.

3 अथेह कस्मान्न भवति याज्ञिकश्चायं वैयाकरणश्च
कठश्चायं बह्वृचश्च औक्थिकश्चायं मीमांसकश्च

महाभाष्य. 2 अ. 2 पा. 29 सू.

4 (25 पु अधस्तात् 3 पङ्क्ति.)
अथ गौरित्यत्र कः शब्दः? गकार-ओकार-बिसर्जनीया इति भगवानुपवर्षः

शा. भा I vol. 10 पु.

5 मीमांसकानाञ्च मीमांसकानाञ्च

तै-प्राति-5 अध्या 41 सू.

6 व्याख्यानं प्रातिशाख्यस्य वीक्ष्य वाररुचादिकम्।
कृतं त्रिभाष्यरत्नं यद्भासते भूसुरप्रियम्॥

तै-प्राति-त्रिभाष्यरत्नोपक्रमे

7. तत्र कानिचित् जैमिनिकात्यायनयोः समानानि सूत्राणि प्रदर्श्यन्ते।

| जैमिनेः | कात्यायनस्य |
| --- | --- |
| शमिताच ( अन्यः ) शब्दभेदात् । | विशास्ति पशुमन्यः । |
| प्रकरणाद्वोत्पत्त्यसंयोगात् । | ऋत्विजां वैकोऽपक्लृप्तत्वाच्छामित्रे |
| उपगाश्च लिङ्गदर्शनात् । | उपगादर्शनाच्च । |
| अ-3, पा 7, सू 28-30. | अ-6, सू 147—149. |
| विक्रयी त्वन्यः कर्मणोऽचोदितत्वात्। 3—7—31 | विक्रयी त्वन्यः शूद्रसंयोगात् । 6—150 |
| दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् । उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम् । 6—5—38—39. | कालातिक्रमे नियतक्रिया प्राप्तकालत्वात् । न समत्वात् । 7, 22—23 |
| तत्र यौगपद्ये विप्रतिषेधाद्विकल्पः स्यात् । | युगपच्चेद्विरोधाद्विकल्पः । |
| पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् । 6—5—51 & 54 | पूर्वदौर्बल्यमानुपूर्व्ये प्रकृतिवत् । 25, 258—259 |
| साम्युत्थाने विश्वजित् क्रीते विभागसंयोगात् । | क्रीते विभागः श्रुतेः । |
| प्रवृत्ते वा प्रापणान्निमित्तस्य । 6—5—25, 26 | उपपाताद्वोभयतः । 25, 252—253 |
| पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् । लिङ्गाद्वा प्रागुत्तमात् । 9--1-29--30 | पत्नीसंयाजान्तान्यहान्यन्त्यवर्जम् 12--67 |

सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् । स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ।

10—2—57-58

मृते तदन्तमर्थाभावात् । समाप्तिर्वोभयचोदनात् ।

22—189—191

मुष्टिलोपात्तु सङ्ख्यालोपस्तद्गुणत्वात् स्यात् । न निर्वापशेषत्वात् ।

10—2—64—65

सङ्ख्यामुष्टिनिवृत्तिः सामान्यात् । न यजतिशब्दात् ।

14—50—51

हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । उत्तरस्य वा मन्त्रार्थित्वात् ।

10—3—13 & 15

पूर्वो देवता सामान्यात् । उत्तरे तु सामान्योपदेशाभ्याम् ।

16---36-37

दिङ्मात्रमिदम् । सन्ति पुनर्भूयांसि सूत्राणि अक्षरशः पदशोऽपि तादात्म्यभाञ्जि । क्वचिज्जैमिनिपक्षमनूद्य कात्यायनस्तिरस्करोति । तत्रेदमेकन्निदर्शनम् । सोमे एकस्मिन् पात्रे बहूनां भक्षणे प्राप्ते जैमिनिः

होता वा मन्त्रवर्णात् । वचनाच्च । कारणानुपूर्व्याच्च ।

3--5--36--38

इति वचनमन्त्रवर्णकारणरूपान् त्रीन् हेतून्निर्दिश्य होतृभक्षणस्य प्राथम्यं साधयति । तदिदं कात्यायनः

होता वा वचनमन्त्रवर्णकारणेभ्यः । 9—236

इति पूर्वपक्षयित्वा —

नाध्वर्युः समभिव्याहारात् । मन्त्राणां चाविधायकत्वात् ।

इति निराकरोति । तदिदं पर्यालोचयतां सेयमिदानीन्तनी जैमिनिसूत्रानुपूर्वी साक्षात्कृता कात्यायनेनेति निश्चेतव्यं भवति ।

8. सशिष्यशौनकाचार्यत्रयोदशकविन्मुनिः ।
वाजिनां सूत्रकृत्साङ्गामुपग्रन्थस्य कारकः ॥
स्मृतेश्च कर्ता श्लोकानां भ्राजनाम्नाश्च कारकः ।
अथर्वणां निर्ममे यः सम्यग्वै ब्रह्मकारिकाः ॥
महावार्तिकनौकारः पाणिनीये महार्णवे ।
यत्प्रणीतानि वाक्यानि भगवांस्तु पतञ्जलिः ॥
व्याख्यत् ।

P. 122 Ancient Sanskrit Literature.

अत्र " भ्राजमानां च " इति पाठं पश्यन् माक्समुल्लर् Bhrajamana, is unintelligible ; it may be Parshada ( पार्षद ) इत्याह । भ्राजा नाम श्लोका इति महाभाष्यकारेण भाष्यारम्भे उदाहरणात् ' भ्राजनाम्नां ' इत्येव पाठेन भवितव्यमिति निश्चिनुमः । इदमस्माकमाश्चर्याय यदत्र केवलमैतिह्यमाश्रित्य ' भ्राजा नाम श्लोकाः कात्यायनेन प्रणीता इति वदन्ति ' इति नागेशभट्ट उद्योते लिखति ।

9 प्रतिनिधौ चाविकारात् । प्रतिनिधिष्वपि ।
जै 9—3—23 आश्वलायनश्रौतसू-116-पु.

अधिकृत्य प्रति नवमे तृतीये यथा जैमिनिस्तथाऽऽश्वलायनोऽपि विचारयन् कचित् कचिदन्यथा सिद्धान्तयति ।

10. 459 पु. आ श्रौ.

11 प्रपञ्चहृदयम् ।

12. Sanskrit Literature. A. A. Macdonell 259.

13 तथा मीमांसायामपि ' गव्यस्य च तदादिषु ' इति गं
र्विकारावयवविषयसाधुप्रयोगयोग्यः शब्दोऽन्यत्रैव गवामयने प्रयुक्तः
तथा ' द्यावोस्तथेतिचेत् ' इति द्यावापृथिव्योरिति वक्तव्ये लक्षणहं
नमेव बहुप्रयुक्तम् । 200 पु. तन्त्र-

14. अत्र स्वोक्तस्य सकलस्यार्थस्य साम्प्रदायिकतां सिद्धान्त
ताञ्च ज्ञापयितुं स्वाचार्याभिमतिं दर्शयति बादरायणस्येति । न ह्येत
त् मतान्तरद्योतनार्थं उक्तस्य प्रामाणिकत्वात् स्वमतस्यावचनाच्च
जैमिनेर्व्यासशिष्यत्वं बादरायणस्य च मीमांसाप्रधानभूतशारीरकश
त्रकृत्वं न्यायसिद्धेऽर्थेऽनुविधेयवचनत्वञ्च महाभारतादिप्रसिद्धम्

सुमन्तुं जैमिनिं वैल्वं शुकं चैव स्वमात्मजम् ।
प्रभुर्वसिष्ठो वरदो वैशम्पायनमेव च ।
वेदानध्यापयामास महाभारतपञ्चमान् ।
संहितास्तैः पृथक्त्वेन भारतस्य प्रकीर्तिताः ।

इत्यादिना जैमिनेर्व्यासशिष्यत्वं प्रसिद्धम् ।

द्वीपे बदरिकामिश्रे बादरायणमच्युतम्
पराशरात्सत्यवती पुत्रं लेभे परन्तपम् ।

इति बादरायणत्वं सहेतुकमुक्तम् । बादरायणस्य शारीरकशास
...

**शतदूषण्यामपीदमुक्तं तृतीयवादान्ते—**

जैमिनेर्बादरायणशिष्यत्वञ्च महाभारतादिषु प्रसिद्धम् । 'सुमन्तुं जैमिनिं पैलञ्च वैशम्पायनमेवच' इत्यादिना । नन्वत्र व्यासशिष्यो जैमिनिरित्युक्तम् सत्यम् ; व्यास एवात्र बादरायणः । 'द्वीपे बदरिकामिश्रे...............' इतिहि स्मर्यते ।

**परतस्तु अन्यमपि बादरायणमयं कवितार्किककेसरी सम्भाव्य किञ्चिदाह । तद्यथा—**

व्यासव्यतिरिक्तेऽपि बादरायणसंज्ञा प्रयुक्तेतिचेत्............ इति रहस्यतमार्थज्ञापकत्वेन प्रसिद्धिप्रकर्षादेः सम्प्रदायादत्र व्यास एव स्वीक्रियते ।

15. **अत्रत्यं तत्वबोधिनीवचनं पर्यालोचनमर्हति—**

याज्ञवल्क्यादयो ह्यचिरकाला इति भारतादिषु व्यवहारः । स एवानुसृतः सूत्रकृता ।

17 **वाराणस्यां चौखांबामुद्रणालये रामयतनटीकया सह मुद्रितानि ।**

18. प्रपञ्चहृदयम् ।

19. प्रपञ्चहृदयम् ।

20 श्लो. वा. आदौ 33 श्लो.

**आश्वलायनश्रौतसूत्रव्याख्यातृषु देवस्वामिनामाऽपि कश्चिदिति प्रवरमञ्जर्यां पुरुषोत्तमो लिखतीति माक्समुल्लर् लिखति।** Ancient Skt. Lit. P. 195. **अस्य देवस्वामिनः प्रपञ्चहृदयदेवस्वामिनश्च भेदाभेदचिन्ता कथं क्रियताम् ?**

21. एकत्रायमलौकिकमनुष्टुप्छन्दः प्रयुङ्क्ते—

नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः

नीलकौशेयसंवीताः प्रणश्यन्तीव कादम्बाः

तदिदं सम्यक् कृत्वा पठति न्यायरत्नमालायां पार्थसारथिमिश्रः।

22 एक आत्मनः शरीरे भावात् (3.3.53)। इति ब्रह्मसूत्रशङ्करभाष्ये

अत एवाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वार्णितम्। इति

23. Sree Sankaracharya. Page 15 (fourth edition)

24. सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणं असद्वादित्वान्न कात्यायनस्य शा. भा. III. 201 पु.

तथा मकारेण अपिङ्गलस्य सर्वगुरुस्त्रिकः प्रतीयेत।

शा. भा. I. 12 पु.

25. एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः।

महा भा. प्र. आह्नि. 18. पु.

गौः गावी गोणी गोपतलिका इत्येवमादयः शब्दा उदाहरणम्

शा. भा. 1. 52 पु.

26. श्रोत्रग्रहणो योऽर्थस्स शब्दः।

वैशेषिकसूत्र. 2 अध्या. 2 आह्निक. 21 सू.

श्रोत्रग्रहणेह्यर्थे लोके शब्दशब्दः प्रसिद्धः

शा. भा. I. 10 पु.

पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः

न्यायदर्शने 2 अध्या. 1 आह्नि. 51 सू.

स्याच्चेदर्थेन सम्बन्धः क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। शा. भा. I. 9 पु.

**न्यायदर्शने द्वितीयाध्यायद्वितीयाह्निकान्ते वात्स्यायनभाष्यम्:--**

**॥ व्यक्त्याकृतिजातयस्तु पदार्थः ॥**

तुशब्दो विशेषणार्थः। किं विशेष्यते? प्रधानाङ्गभावस्यानियमेन पदार्थत्वमिति। यदा हि भेदविवक्षा विशेषावगतिश्च तदा व्यक्तिः प्रधानम्। अङ्गन्तु जात्याकृती। यदातु भेदोऽविवक्षितः सामान्यावगतिस्तदा जातिः प्रधानं अङ्गन्तु व्यक्त्याकृती।

**इति। तदिदं शबरस्वामी पूर्वपक्षीकरोति--**

अस्तु, विशेषणत्वेनाकृतिं वक्ष्यति विशेष्यत्वेन व्यक्तिम्। न ह्याकृतिपदार्थकस्य व्यक्तिर्न पदार्थः व्यक्तिपदार्थस्य वा नाकृतिः। उभयमुभयस्य पदार्थः। कस्यचित् किञ्चित्प्राधान्येन विविक्षितं भवति। तेनात्राकृतिर्गुणभावेन व्यक्तिः प्रधानभावेन विवक्ष्यत इति। नैतदेवम्। इति शा. भा. I. 56 पु.

27. K. V. Rangaswamy Ayyangar M. A., in his University Lecture (1914) 'Some Aspects of Ancient Indian Polity.' P. 90.

28. श्लो. वा. 4 पु.

29. मीमांसार्णवसम्भूतैः कुमारस्वामिना कृतैः
न्यायरत्नैरहं मालां सङ्ग्रथ्नामि मनोरमाम् ।

न्यायरत्नमालोपक्रमे ।

30. The Mīmāmsā Rules of Interpretation.
P. 514.

31. **न्यायरत्नाकरन्यायसुधादिषु बहुत्र बृहट्टीकेति कीर्तितं ग्रन्थविशेषस्य नाम दृष्टवतां प्रथमं शाबरभाष्यस्य गुरुकृता बृहतीनाम्नी टीकैवात्र तत्रतत्राभिप्रेता भवेदिति बुद्धिरासीत् । परतस्तु कौमारिलोऽयं ग्रन्थविशेष इति निर्दितम् । न वयं जानीमः कथमत्रत्येष्वेवमत्र संशयानेषु कुमारिलकृतोऽयं ग्रन्थ इति ज्ञातुं मानियर् विल्लियंस् समर्थो बभूव ।**

32. सम्प्रति टीकाकारीयं मतमुपन्यस्यति ( विधिविवेके 48 पुटे ) ।

**इति वाचस्पतिनाऽवतारणात् प्रभाकरस्य टीकाकार इत्यप्यभिधानमासीदिति विज्ञायते । पार्थसारथिरपि न्यायरत्नमालायाम् ( 77 पुटे ) एवं व्यवहरति ।**

33. "अथ यत्तत्र तत्र" इत्यादिभाष्यस्य श्रुत्यादिविषयत्वं 'स्थिते चाप्राप्तबाधत्वे प्राप्तबाधोऽपि नोत्तरम्' इत्यनेन वार्तिकेन दूषितम् । केचनास्य दूषणस्य सामान्यतः प्राप्तिं मन्वाना विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति । विशेषावगमात्तेषां निवर्तत इत्यनेन न कश्चिदपि परिहारलेशः । शा. दी. बलाबलाधिकरणान्ते । 3. 3. 7.

अत्र सोमनाथो लिखति—

....यदाचार्यैर्भाष्ये दूषणमुक्तं तत् प्राभाकरैः परिहृतं तदनूद्य निराकरोति **केचनेत्यादिना** । अत्र **सामान्यतः प्राप्तिमित्यारभ्य निवर्तत** इत्यन्तो गुरुग्रन्थः । ऋजुविमलायां तथा लेखनात् इति ।

34. **आत्मतत्त्वविवेके (कलकत्तामुद्रणे मूलमात्रे)** 32-33 **पु.**

यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्पः

**इत्याद्याः** 12 **पङ्क्तयः**

**अपोहसिद्धौ** ( Bibliotheca Indica : Six Buddhist Nyaya Tracts ) 1-2 पु.

अथ यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्पः

**इत्याद्याः पङ्क्तयः** ।

35. **आत्मतत्त्वविवेके** 51 **पु. अन्तिमास्तिस्रः पङ्क्तयः**

शब्दस्य कास्विदपि वस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः किमिहास्ति नो वा ।
अस्त्येव चेत् कथमियान्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः ॥

**इदमेव पद्यं ' अत्र सिद्धान्तसङ्क्षेपः ' इत्युपक्रम्य 'शब्दस्य कास्विदपि वस्तुनि ' इत्यस्य स्थाने ' धर्मस्य कस्यचिदवस्तुनि ' इति ' अस्त्येव चेत् ' इत्यस्य स्थाने ' काप्यस्ति चेत् ' इति च विपर्यासेन क्षणभङ्गसिद्धेरन्ते ( 76 पु ) पठ्यते । परन्तु तथैव तत्रैव 62 पुटे ' यदाहुर्गुरवः ' इत्युपक्रम्य पठ्यते ।**




36. आत्मतत्वविवेके 34 पु.

37. **भास्करब्रह्मसूत्रभाष्ये (श्री चौखांबामुद्रण) 18 पुटे.**
सङ्ग्रहश्लोकः। कार्यरूपेण नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा। इति
**तमिमं श्लोकं समन्वयाधिकरणभामत्यां (निर्णयसागरशाङ्कर-सूत्रभाष्ये व्याख्यानत्रयोपेते 73 पुटे) 'यथाहुः' इति वाचस्पतिरनुवदति।**

38. अत्रैव जरत्प्राभाकरोन्नीतार्थं गुरोर्वचः सङ्गच्छत इत्याह
न्यायकणिका (काशी-मेडिकल्-हाल्मुद्रणे) 109 पु.।
सम्प्रति जरत्प्राभाकरमतमुपन्यस्यति 196 पु.

39. **पार्थसारथेर्न्यायरत्नमालायाः वाचस्पतेर्न्यायकणिकायाश्च प्राभाकरसम्मतनियोगविधित्वनिराकरणप्रकरणे अर्थतश्शब्दतश्च बहुलं संवादो दृश्यते [न्यायरत्नमालायाः 41 पुटप्रभृति विधिविवेकेन सह मुद्रितन्यायकणिकायाश्च 55 पुटप्रभृति त्रिचतुराणि पत्राणि पर्यालोचनीयानि] उभयोरप्यनयोः सुस्पष्टेन प्रकरणपञ्चिकाप्रतिपादितार्थानां शब्दतोऽपि भूयसाऽनुवादेन प्रकरणपञ्चिकाकारात् शालिकनाथादर्वाचीनत्वमसन्देहगन्धं निश्चीयते। तत्र किं पार्थसारथेर्न्यायरत्नमालां दृष्ट्वा वाचस्पतिर्लिखति, उत एतदीयां न्यायकणिकान्दृष्ट्वा पार्थसारथिर्लिखतीति न झटित्यवधारयितु पार्यते। इदन्तु सर्वथाङ्गीकर्तव्यं यत् तयोः पौर्वापर्यमावश्यकमिति।**

40. तथाच काशिका । सेश्वरमीमांसा 64 पु.
तथाच भवनाथेन । से. मी. 8 पु.

41. सर्वदर्शनसङ्ग्रहे ( आनन्दाश्रममुद्रिते ) 44 पुटे
' वेङ्कटनाथेनातिवित्थं निरटङ्कि ' इत्यादि

42. न्यायसुधायाम्

इति श्रीमत्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरविरचितायां................न्यायसुधाख्यायाम् ।

इत्येवं प्रतिपाद्यमवसानं दृश्यते । तथा माधवीयन्यायमालाविस्तरस्यान्ते ( आनन्दाश्रममुद्रणे )

इति श्रीमत्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टश्रीमाधवविरचिते जैमिनीयन्यायमालाविस्तरे ।

इत्येवमवसानम् । तथा सोमेश्वरः न्यायसुधायां तृतीयाध्यायचतुर्थपादान्ते पञ्चश्लोकान् लिखितवान् । तत्र चतुर्थे

माधवार्यस्य सूनुः , सोमेशः कर्तुमैच्छत्

इत्याह ।

अत्राद्ये श्लोके

व्याख्याता तन्त्रटीका बहुभिरपि भृशं सत्यमन्यैर्निबन्धैः

इति वदन् बहूनि तन्त्रवार्तिकव्याख्यानानि स्थिताविनष्टानीति गमयति ।

43. न्यायसुधा 1285 पु.

44. एतस्यापदेवस्य पुत्रः स्मृतिकौस्तुभे स्वीये स्ववंशपरम्परामेवं कथयति :—

आसीद्गोदावरीतीरे वेदवेदिसमन्वितः ।
श्रीकृष्णभक्तिमानेक एकनाथाभिधो द्विजः ॥
तत्सुतस्तद्गुणैर्युक्तः सर्वशास्त्रार्थतत्त्ववित् ।
आपदेवोऽभवत् देवात् प्राप यस्सकलान्मनून् ॥
मीमांसानयकोविदो मधुरिपोस्सेवासु नित्योद्यतो
विद्यादानसुभावितोत्तमयशाः आसीत्तदीयात्मजः ।
यस्यानन्तगुणैरनन्त इति सन्नामार्थवत्तां गतं
येनावादि च वादिनां श्रुतिशिरस्सिद्धान्ततत्वं मुदे ॥
न्यायप्रकाशकर्ता निरवधिविद्याऽमृतप्रदः सततम् ।
मीमांसाद्वयनयवित्तनयस्तस्यापदेवोऽभूत्
तस्यात्मजं वैदिकशास्त्रविज्ञं सन्तोऽसकृत्प्राहुरनन्तदेवम् ।
बाजाहूराज्ञो वचसा विधेयं निबन्धसारोद्धरणं त्वयेति ॥

45. विधिरसायने 174 पु.

46. तत्रैव 96 पु. । प्रभाकरमतानुरोधीत्यप्येष वरदराजः प्रतीयते । तदिदं वरदराजीयं अप्पय्यदीक्षितेनापि स्वीये उपक्रमपराक्रमे ( 15 पु. ]

वेदोपक्रमाधिकरणे वरदराजीयेऽपि

इत्युदाहियते ।

46. सोमनाथीये ( 205 पु. )

स्पष्टं चात्र विषये प्रकरणमस्तीति क्षीरसागरमिश्रेण तन्मतानुवर्तिना प्रतिपादितमिति

लेखनात् प्राभाकरमतानुसारि क्षीरसागरमिश्रो नाम कश्चन ग्रन्थकार आसीदिति प्रतीमः । तथा ७४९ पुटे

दीपशिखाकृतस्तु

इति लिखितम् । ततो दीपशिखा नाम ग्रन्थो मीमांसाया-मासीदिति विज्ञायते । ग्रन्थोऽयमप्पय्यदीक्षितेनापि उपक्रमपराक्रमे ( 16 पु )

गुरुग्रन्थो मूलयुक्तिमाहेति दीपशिखायामवतारितः

इति निर्दिश्यते । तदिदं प्राभाकरमतानुसारिणी दीपशिखेति ज्ञापयति । कदाचिदिदं गुरुकृतस्य निबन्धनग्रन्थस्य व्याख्यानं भवेत् ।

47. His commentary, entitled Sastradipika, has been amply expounded in glass bearing the title of Mayukhamala, by Somanatha, a Carnatic Brahmin, whose elder brother was high priest of the celebrated temple at Venkatadri.

Colebrooke's Miscellaneous Essays I,299 P.

48 बालप्रकाशे 101 पु

49 ,, 114 ,,

50 ,, 22 ,,

51 भाट्टदीपिका ( मैसूर-मुद्रणे ) II 362 पु

52 सोमनाथीये 832 पु

53 यत्तु सोमनाथीये । अरुणाधिकरण (3—1—6) पूर्वपक्षारंभे
यत्तु बालप्रकाशे । प्रकरणान्तराधिकरणान्ते 2--3-11.

54 दृप्यद्द्राविडदुष्टदुर्ग्रहवशान्म्लिष्टं गुरुद्रोहिणा
यन्म्लेच्छेति वचोऽविचिन्त्य सदसि प्रौढेऽपि भट्टोजिना ।
तत्सत्यापितमेव धैर्यनिधिना यत्सव्यमृद्रात्कुचं
निर्बध्यास्य मनोरमामवशयन्नप्यप्पयाद्यान् स्थितान् ॥

श्रीरङ्गमुद्रितयादवाभ्युदयद्वितीयसम्पुटभूमिकायाम् 14 पु.

55. श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।
देवादेवादध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयम्
शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः ॥
पाषाणादपि पीयूषं स्यन्दते यस्य लीलया
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम् ॥

रसगङ्गाधरे 2 पु.

अत्र देवादेवेत्येतद्व्याचक्षाणो नागेशभट्ट आह
देवादेव. एवः प्रसिद्धौ खण्डदेवादेवेत्यर्थः ।

**अयं पेरुभट्टः जगन्नाथस्य पितेति उदाहृतश्लोकतो न प्रतीयते । तथाऽपि तदीयग्रन्थान्तरमालोच्य एवं प्रतीयत इति केचिल्लिखन्ति ।**

56. अप्पय्यदीक्षितस्य कालजीवितप्रबन्धादिकं श्रीरङ्गवाणीविलासमुद्रितप्रकटितयादवाभ्युदयद्वितीयसम्पुटभूमिकायां A. V. गोपालाचार्येण M. A., B. L., सम्यक् निरूपितमिति तत्पर्यालोचनमवश्यकर्तव्यं विमर्शकानाम् ।

57. अयं ग्रन्थः प्रतिसूत्रमक्षरार्थवर्णनेऽपि व्यापृतः । भट्टोजिदीक्षितकृतायाः सिद्धान्तकौमुद्याः बालमनोरमा नाम ललितं व्याख्यानं येन कृतं स एवायं वासुदेवदीक्षित इति वदन्ति । अध्वरमीमांसाकुतूहलवृत्तावपि ललितललिता शैली । विवक्षितस्य विशदमनाकुलं प्रतिपादने कामं विशिष्यत एवायं दीक्षितः ।

---

## ॥ अथ चतुर्थाधिकारानुबन्धः ॥

1. ( 62 पु. अधस्तात् ९ पङ्क्तिः )

अनन्तरसङ्गतिरपि षड्विधा । आक्षेपसङ्गतिः अपवादसङ्गतिः दृष्टान्तसङ्गतिः प्रत्युदाहरणसङ्गतिः उपोद्घातसङ्गतिः प्रसङ्गसङ्गतिरिति । नैयायिकास्तु

सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते ॥

इति वदन्ति । अत्र हेतुतादीनामनावश्यकत्वेऽपि क्वचिदवसरसङ्गतिर्मीमांसकैरवश्यमभ्युपगन्तव्येति भाति ।

2. ( 70 पु अधस्तात् ९ प )

**अत्रेमाः कुमारिलभट्टपङ्क्तयः....**

याद्दशताद्दशमीमांसकैरपि अतीन्द्रियविषयपुरुषवचनप्रामाण्यनिराकरणात् , अपौरुषेयत्वाध्यवसायनिराकृतकारणदोषाशङ्कनिरपवादप्रामाण्यसिद्धिं प्रतिहन्तुमशक्यां मन्यमाना निरुत्तरीभूता बालानुकरणवाक्यसदृशैः स्ववाक्यैर्व्यवलिख्यमानहृदयास्सन्तोऽपि प्रक्षीणकुहेतुवचनजालाः, कन्यावरणार्थागतमूर्खवरगोत्रप्रश्नोत्तरवत्....

यदेव भवतां गोत्रं तदस्माकमपीतिवत् ....

आहुः स्वागमनित्यत्वं परवाक्यानुकारिणः । त. वा. 169 पु

**किं ते गोत्रं इति पृष्टो वरः , यदि यद्भवतां तदेव ममापीति वदेत् तर्हि सद्य एव स आत्माभिलषितं हातुं निर्बद्धो भवति । निषिद्धो हि धर्मशास्त्रेषु समानगोत्रे उत्पन्नयोः स्त्रीपुंसयोर्विवाहः । मूर्खस्तु भवन् वरः परैरभिधीयमानोऽपि न समीचीनं पन्थानं भजेत । तथा यदि वेदविद्वेषी वदेत् यदि भवतां वेदो नित्यः तर्हि आस्माकीनोऽपि वेदस्तथेति , तर्हि तदानीमेव स परिभवं प्राप्नोतीति कुमारिलस्याशयः ।**

**तदिदमनुवदन् मोक्समुल्लर् आह ।**

Therefore their hearts being gnawed by their own words which are like the smattering of children, and having themselves nothing to answer, because the deception of their illogical arguments has been destroyed, they begin to speak

like foolish suitor who came to ask a bride, saying 'My family is as good as your family' ( यावत्प्रशस्तं भवतां कुलं तावन्ममापि ) Ancient Sanskrit Literature 44 P.

अत्रास्य विमर्शकस्य अग्रहो अन्यथाग्रहो वा स्फुटः ।

3. ( 70 पु अधस्तात् २ प. )

It may be very brave to postulate 2000 B. C. or even 5000 B. C. as a minimum date for the Vadic hymns, but what is gained by such bravery ? Such assertions are so far as they cannot be refuted,.........

Six Systems of Indian Philosophy. 34 P.

4. The Veda received as holy by orthodox Hindus consists of two parts prayer and precept ( Mantra and Bramhana. ] Jaimini has attempted to give a short definition of the first adding that the second is its supplement; whatever is not Mantra is Bramhana. The ancient scholiast has endeavoured to supply the acknowledged defect of Jaimini's imperfect definition, by enumerating the various description of passages coming under each head. Later scholiasts have shown that every article in that enumeration is subject to exceptions and the only test of distinction, finally acknowledged is admission of the expert, or acceptance of approved teachers who have taught their deciples to use one passage as a prayer, and to read another as a precept.

Colebrooke's Miscellaneous Essays 307P.

अभियुक्तानां यत्र मन्त्रत्वेन प्रसिद्धिस्ते मन्त्राः , यत्र ब्राह्मणत्वेन तानि ब्राह्मणानीत्यभिधीयमानं न यथावदयं जग्राहेति अत्र भाषान्तरानुवादे चरमं वाक्यमालोचयद्भिरवधेयम् ।

---

## अथ सप्तमाधिकारानुबन्धः ।



1. एतच्चरितं श्रीरङ्गवाणीविलासमुद्रितप्रकाटितयादवाभ्युदयप्रथमसम्पुटोपक्रमे तत्र भवता ए. वि. गोपालाचार्येण भाषान्तरेण प्रत्यपादि ।

2. अधिकरणस्य केषाञ्चिन्मते विषयः तदर्थे संशयः संशयकारणं सङ्गतिः तदर्थविचारः फलफलिभावः पूर्वपक्षयुक्तिः सिद्धान्तयुक्तिः निर्णयः प्रयोजनमिति दशाङ्गानि भवन्ति। तदुक्तं मीमांसापादुकायां—

> आहुश्चान्ये दशाङ्गान्यधिकरणगणे वेद्यमाद्यं तथाऽर्थे
> संशीतिं तन्निदानं विविधमपि तथा सङ्गतेश्च प्रकारम् ।
> तादर्थ्यार्थे विचारं फलफलिभवनं पक्षयोर्न्याययुग्मं
> निर्णीतिं तत्फलञ्चाप्ययमपि निपुणन्यायवित्सम्प्रदायः॥२०॥

3. प्रत्यक्षमनुमानञ्च शाब्दञ्च विविधागमम्

मनु 12—105.

प्रत्यक्षानुमानागमाः प्रमाणानि

योगसू 1 पा 7 सू.

# अथाष्टमाधिकारानुबन्धः ।



1. मीमांसापादुका ९ श्लो.

2. अधिकरणसारावलि 10 श्लो.

3. पूर्वोत्तरमीमांसावादनक्षत्रमाला 258 पु.

4, कर्मदेवताब्रह्मगोचरा सा त्रिधोद्भभौ सूत्रकारतः
जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात्
न्यायपरिशुद्धावुदाहृतम् 299 पु

5. वृत्तिग्रन्थे तु जैमिन्युपरचिततया षोडशाध्याय्युपात्ता
सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्वरत्नाकरोक्तिः
अत्र ब्रूमः सदुक्तौ न वयमिह मुधा बाधितुं किञ्चिदर्हाः
निर्वाहस्तूपचारात् क्वचिदिह घटते ह्येकतात्पर्ययोगः
अधिकरणसारावलि 15 श्लो.

6. यः खलु जैमिनिस्साध्यधर्मविचारार्थं द्वादशाध्यायीं प्रणीय तत्राविचारितोऽपि कियानंशोऽस्तीत्यालोच्य तद्विचारार्थं पुनस्सङ्कर्षणाख्यां चतुरध्यायीं प्रणिनाय

[ शिवार्कमणिदीपिकाप्रथमसम्पुटे ३९ पुटे.

सङ्कर्षणकाण्डोऽप्यविचारितकर्मविशेषविषय एव । जैमिनिर्हि द्वादशलक्षणीं प्रणीय तत्राविचारितांशमालोच्य पुनरपि चतुर्लक्षणीं प्रणिनायेति प्रसिद्धिः । अत एव हि संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति वृत्तिग्रन्थोऽपि सङ्गतः । अत एव प्रदा-

नवदेवेत्यधिकरणे (रामानुज) भाष्ये यत्संवादतयोक्तं ' नाना वा देवता-पृथक्त्वात् ' इति तज्जैमिनीय एव दृश्यते नतु देवताकाण्डे काशकृत्स्नीये । अतोऽपि सङ्कर्षः कर्मविषय एव तत्रैव केषाञ्चिद्देवताकाण्डत्वव्यवहारोऽप्यस्तीति ।

[ श्रीरङ्गरामानुजमुनिविरचितायां ग्रन्थाक्षरमुद्रितायां श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां 44 पुटे )

**काशकृत्स्नसम्बन्धो मीमांसाया आसीदिति ञितश्च तत्प्रत्ययात् ( पाणिनि ( 4—3—155. ) इति सूत्रमहाभाष्यग्रन्थेनाप्यनेन ज्ञायते—**

काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी । तामधीते काशकृत्स्ना ब्राह्मणीति ।

**अत्रोदाहृतग्रन्थवशादेव सङ्कर्षकाण्डः सङ्कर्षणकाण्ड इत्युभयथाऽपि व्यवहार इति ज्ञायते ।**

7. अन्ते हरौ तद्दर्शनात् ।

शत दू. I 75 पु.

स विष्णुराहहि ।
तद्ब्रह्मेत्याचक्षते तद्ब्रह्मेत्याचक्षते ।

अणुभाष्यम् 359.

वचनात्सर्वेषां सहावदीयेरन् ।
तेषां सहप्रदानमवदानैकत्वात् ।
नाना वा देवतापृथक्त्वात् ।

शतदू-I 80

आग्रयणाभ्यासः प्रकरणात्
दर्शपूर्णमासयोर्वाऽन्तरालसंयोगान्न ह्यन्यत्प्रत्यक्षम् ।

न्यायसुधा 145-6.

# अथ नवमाधिकारानुबन्धः ।



1. प्रासङ्गिकमिदं कार्यमिदं तन्त्रेण लभ्यते

वाक्यपदीये 2 का 79 श्लो.

ःयादयः पञ्चषाः श्लोकाः व्याख्यानेन सहानुसन्धेयाः

अर्थतोह्यसमर्थानामानन्तर्येऽप्यसम्बन्धः मीमांसा-4-3-11.

ते जैमिनेर्विश्वजिदधिकरणसूत्रैकदेशमवलम्ब्य प्रवृत्तं पद्य-
ह न्यायभाष्ये वात्स्यायनः ।

यस्य येनास्ति सम्बन्धो दूरस्थस्यापि तस्य सः
अर्थतोह्यसमर्थानामानन्तर्यमकारणम्

(न्यायदर्शने 1 अ. 2 आह्नि. कालात्ययापदिष्टसूत्र भाष्ये)

तत्त्वचिन्तामणिकारो गङ्गेशोपाध्यायोऽपि मङ्गळवादे
त्रेषभ्योऽधिकान् मीमांसान्यायान् सञ्चारयति ।

यथा भर्तृहरिर्व्याकरणे तथा कवितार्किककेसरी उत्तर-
मांसायां पूर्वमीमांसाद्वादशाध्यायार्थानामुपयोगं दर्शयति श-
ष्यां । तद्यथा....

कोऽसावुपयोग इति चेत् न्यायोरजीवनन्ता वत् ।

तथाहि--बाह्यान्तरनिमित्ताप्रामाण्यनिराकरणेन प्रमाणलक्षणन्तावत् कृत्स्नोपयुक्तम् । भेदलक्षणोपजीवी च गुणोपसंहारपादः । तार्तीयाश्च श्रुतिलिङ्गादयस्सार्वत्रिकाः । प्रयुक्तिश्च वर्णाश्रमादिधर्माणां विद्याप्रयुक्तत्वाश्रमप्रयुक्तत्वादिविमर्शे निविशते । गतिचिन्तायाञ्च पाञ्चमिकः क्रमः । कर्ता विद्याधिकारिचिन्तने विशेष्यते । अतिदेशादयश्च तदेवरूपं यदमुष्यरूपमित्यादिषु ।

( Vol. 1 तृतीयवादे )

---



॥ श्रीः ॥

# अनुबन्धपरिशिष्टम् ।

---

भारतीयानां सम्प्रदायमनुसृत्य मीमांसाया अपि प्रवृत्तिरपौरुषेयीति पूर्वं केषाञ्चिन्मतिरासीदिति ज्ञायते । यथाह पार्थसारथिमिश्रः ( न्यायरत्नाकरे ८ पुटे )....

पर्वाविच्छेदः । गुरुपर्वणां क्रमो गुरुपर्वक्रमः । तद्यथा । ब्रह्मा प्रजापतये मीमांसां प्रोवाच । सोऽपीन्द्राय । सोऽप्यादित्याय । स च वसिष्ठाय । सोऽपि पराशराय । पराशरः कृष्णद्वैपायनाय । सोऽपि जैमिनये ।स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवानिति ।

परन्तु ' मीमांसकैस्तु सर्वत्र दृष्टान्नाधिकमिष्यते ' इति स्वमतमपरित्यजन्नत्राविस्रम्भमाविष्करोति —

सोऽयमेवंविधस्सम्बन्धो निष्फलो निर्हेतुकश्च । न ह्यस्मिन् सम्बन्धे किञ्चित्प्रमाणमस्तीति ।

---

न्यायग्रथनार्थतन्तुरूपत्वात् सूत्रव्यवहारः ( String of Rules ) इति माक्स्मुल्लर् । तत्र न किञ्चिदुपष्टम्भकं दृश्यते । यस्मात्तु पुरा ग्रन्थान् तालपत्रेषु विलिख्य द्वारं कृत्वा प्रोतेन सूत्रेण तानि पत्राणि बबन्धुः तस्मात् ग्रन्थानां सूत्रव्यवहारः प्रावर्ततेति गोल्स्टक्कर् उपपादयति ( Panini p 15. )

'तत्र वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणां' इति जन्मादिसूत्र (1-1-2) शङ्करभाष्यमनुसृत्य माक्स्मुल्लर् तथाऽभिहितवान् भवेदिति भाति । चमत्कारभाषितमिदं भाष्यकारस्य न सूत्रपदप्रवृत्तिनिमित्तकथनपरमिति नास्ति संशयः । गोल्स्टक्कर् - अस्योपपादनन्तु नास्माकं हृदयङ्गमम् । 'सूत्रन्तु सूचनात्तेषां' इति कल्पसूत्राधिकरणारम्भे कुमारिलकथितन्तु तात्त्विकं प्रवृत्तिनिमित्तं भवितुमर्हति ।

---

मणिमेखलानाम्नि द्राविडकाव्ये 27 गाथायां व्यासजैमिनिवत् कृतकोटिरित्यपि कश्चित् शास्त्रकार इति कीर्त्यते । ता इमाः पङ्क्तयः---

'வேதவியாதனுங்கிருதகோடியு
மேதமில் சைமினியெனுமிவ்வாசிரியர்
பத்துமெட்டு மாறும் பண்புறத்
தத்தம் வகையாற்றும் பகர்ந்திட்டனர்.'

[वेदव्यासः कृतकोटिः अनवद्यो जैमिनिरितीमे आचार्याः दश अष्ट षडिति (क्रमेण) स्वस्वमतेन (प्रमाणानि) अवोचन्।]

---

शाबरभाष्ये अष्टमाध्यायारम्भे श्लोकमप्युदाहरन्ति इत्युक्त्वा श्लोकः कश्चिदुदाह्रियते

वितीर्य हि महज्जालं ऋषिस्संक्षिप्य चाब्रवीत् । इष्टं हि विदुषां लोके समासव्यासधारणम् । इति ॥

तत्र 'त्रितीर्यहि महज्ज्वालम्' इत्यनन्वितोऽपपाठ इ
महाभारते आदिपर्वणि प्रथमाध्याये इममत्र श्लोकं (61) ति
स्तीर्यैतन्महत् ज्ञानम्' इति पाठेन दृश्यमानं पश्यन्तो मन्यामहे
तदिदं, मन्ये, महाभारतसंहितायाः कालनिर्णयं प्रत्युपयुज्येत

---

न्यायरत्नमालाया व्याख्यानं किञ्चिदस्ति रामानुज
कर्तृकं नायकरत्नं नाम । नामैक्यात् केषाञ्चिद्भ्रमो भगवद्रा
मानुज एवायमिति । वस्तुतस्तु तञ्जापुरपुस्तकशालायामुपल
ब्धं तद्व्याख्यानखण्डं परीक्षितवतो मे अन्य एवायं यःकश्चि
दर्वाचीनो रामानुज इति निश्चयो भवति । बहुत्रायं न्यायरत्न
मालापङ्क्तीनामाशयं न सम्यक् जग्राहेति मे भाति । पाङ्क्तिव्याख्या
नं विना न क्वचिदर्थं स्वातन्त्र्येण किञ्चिद्वदति । उपलब्धभाग
मात्रपर्यालोचनान्न मतिर्भवति नायं तथा निरूढपाण्डित्यो मी
मांसायां यथा सामान्यतो लोके मन्यन्ते ।

---

सोमेश्वरस्य पिता महादेव इति कीत् आह (कर्ममी
मांसा 10 पु) । न्यायसुधान्ते दृश्यमाने श्लोके 'माधवार्यस्य
सूनुः' इत्युपलंभात् माधवस्तस्य पिता न महादेव इति भाति
Madhava इति भाषान्तरे लिखितं तन्नामधेयं Mahade
इति केनचिदन्यथाकृत्य लिखितं स्यादिति मन्तुमस्त्यवसरः

---

अप्पय्यदीक्षितकृतश्लोकरूपविधिरसायनविवरणस्य स
खोपयोजिनीति नामनिर्देशं कीत् करोति । तत्रत्यं श्लोक

नुसृत्य सुखावबोधिनीति नाम युक्ततरमित्युक्तम् । श्लोके वि-विच्यते ' इत्येतदनुसृत्य विधिरसायनाविवेचनीत्यपि नाम भवितुमर्हति ।

---

खण्डदेवः 1665 क्रिस्तुवर्षे काश्यां संस्थित इति तच्छिष्यः शम्भुभट्टः 1708 वर्षे भाट्टदीपिकाव्याख्यानं चकारेति च कीत् लिखति । ग्रन्थान्तराण्यपि तेन कीर्त्यन्ते । गोपालभट्टस्य विधिरसायनभूषणं शङ्करभट्टस्य विधिरसायनदूषणं केशवस्य बालप्रकाशव्याख्यानं अनन्तदेवभ्रातुर्जीवदेवस्य भाट्टभास्करः रघुनाथस्य मीमांसारत्नं वल्लभाचार्यस्य पूर्वमीमांसाकारिका जैमिनिसूत्रभाष्यमपि किञ्चिदिति । तथा त्रिमत्रयपरित्राणं तन्त्रकुसुमाञ्जलिः न्यायकोश इत्यन्येऽपि बहवो मीमांसाग्रन्थाः श्रूयन्ते । परन्त्वेषां प्रायेण आत्रेचूट् -- अस्य ग्रन्थसूचीं विना नान्यतः परिज्ञानं शक्यमिति भाति । न्यायकोशं प्रति त्वनुयुक्तोऽस्मत्सुहृत मद्रराजकीयामुद्रितग्रन्थशालास्थः पण्डित वे. कृष्णमाचार्यो लिखति—

> मीमांसान्यायकोशाख्यो ग्रन्थोऽत्र वर्तते । स च केरलदेशीयात् तालपत्रकोशात्प्रतिलेखीकृतः । तस्य कर्तृनाम न ज्ञायते । ग्रन्थश्चासम्पूर्णः । ग्रन्थरीतिश्चाधिकरणप्रस्थानरूपा वर्तते । मध्येमध्ये शाबरभाष्यपङ्क्तयो व्याख्यायन्ते । प्राभाकरमतानुसारी ग्रंथ इति प्रतीयते । आरम्भे चैष श्लोकः परिदृश्यते ।

गुरुक्रमागतज्ञानप्रवाहैकप्रयोजनः ।

नाथद्वयमतोद्धारो न्यायकोशो निबद्धयते ॥

नाथद्वयेत्यनेन भवनाथशालिकनाथावभिप्रैतीति प्रतीयते । इति ।

---

**प्रसिद्धमीमांसाग्रन्थसङ्कीर्तनपरा इमास्सर्वदर्शनकौमुदीपङ्क्तयः एतावता कालेनाविदितमप्यंशमावेदयन्त्यो मन्ये मीमांसाचरितपरिज्ञानकुतूहलिनां तोषाय भवेयुः ।**

अथ मीमांसा निरूप्यते । तत्र मीमांसा सहस्राधिकरणा जैमिनिमुनिनिर्मितसूत्रा ।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।

निर्णयश्चेति पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ।

सा च द्वादशलक्षणी । तत्र पूर्वषट्कमपरषट्कञ्चेति भागद्वयम् । तत्र सहस्राधिकरणद्वादशलक्षण्या मीमांसायाश्चतुर्विंशतिसहस्रं शबरस्वामिकृतं भाष्यम् । भाष्यस्यैका बृहट्टीका द्वितीया मध्यमटीका तृतीया टुप्टीका चतुर्थी कारिका पञ्चमं तन्त्रवार्तिकं उक्तानुक्तदुरुक्तचिन्तनम् । तत्र बृहन्मध्यमटीके सम्प्रति न वर्तेते । ( अन्यत् ) त्रयन्तु भागशो वर्वते । प्रथमाध्यायप्रथमचरणे तर्कनामके कारिका । ततः परमा ( तृतीया ) ध्यायसमाप्ति तन्त्रवार्तिकम् । तदुपरि टुप्टीका । कारिकायाश्चोम्बेकानिर्मिता एका टीका ( अपरा )

जिता नाम टीका । वार्तिकस्यैव राणकापरपरपर्याया न्यायसुधा टीका । टुप्टीकायाः पार्थसारथिकृता टीका । द्वादशलक्षण्यां प्रकरणं शास्त्रदीपिका पार्थसारथिनिर्मिता । तन्त्रवार्तिकस्य प्रकरणं न्यायरत्नमाला । विधिविवेकभावनाविवेकौ मण्डनमिश्रकृतौ तयोरेव विचारभूतौ । विधिविवेकटीका न्यायकणिका वाचस्पतिमिश्ररचिता । एतद्भाट्टप्रस्थानम् । प्राभाकरप्रस्थानन्तु भाष्यस्य प्रा ( प्र ? ) भाकरकृतं व्याख्यानद्वयम् । एकं विवरणं षट्सहस्ररूपम् । अपरो ( रं ? ) निबन्धसंज्ञं द्वादशसहस्रम् । विवरणस्य ऋजुविमला निबन्धस्य दीपशिखा ( इति ) टीकाद्वयम् शालिकनाथकृतं शालिका नाम । नयविवेको भवनाथकृतं प्रकरणं द्वादशसहस्रम् । तट्टीका वरदराजकृताऽष्टाचत्वारिंशत्साहस्री । तथा प्रस्थानं ( ? ) इत्यादि निबन्धास्सन्ति*।

लघुवार्तिकमित्यपि किञ्चित् कुमारिलकृतं आत्रचट्ट निर्दिशति। अद्य वर्तमानां टुप्टीकां दृष्टवतो मे चिराय संशय आसीत् यदि वाऽनया केनचिदर्वाचीनेन कृतया मिथ्याटुप्टीकया भवितव्यं अथवा टुप्टीकाग्रन्थस्य महत एकदेशभूतयाऽनया भवितव्यमिति । न्यायसुधायां हि नामधेयपादप्रथमसूत्रव्याख्यानावसरे टुप्टीकाग्रन्थोदाहरणं क्रियते । तथा तानिद्वैधाधिकरणेऽपि । न च वर्तमानटुप्टीकायामेतद्व्याख्यानं दृश्य-

* अस्याः सर्वदर्शनकौमुद्याः सद्भावं ज्ञापितवति के. एस्. रामस्वामिशास्त्रिणि इमाः पङ्क्तीर्विलिख्य प्रेषितवति वे. कृष्णमाचार्ये च सर्वदाऽहं कृतज्ञो भविष्यामि ।

ते । एवं विधिरसायनेऽप्यय्यदीक्षितोऽसकृत् टुप्टीकामुदाहरति (26, 94. 103 पुटेषु द्रष्टव्यम्) । तत्र टुप्टीकास्थत्वेनोक्ता अंशा अद्यतन्यां टुप्टीकायां न दृश्यन्ते । पार्थसारथिमिश्रकृते तन्त्ररत्ने धृतानां सर्वेषां प्रतीकानां वर्तमानटुप्टीकायामुपलम्भान्न तत्र संशयो युक्त इति मे मित्रं के. एस्. रामस्वामिशास्त्री तदुभयं परीक्ष्य निवेदयतिस्म । तथाऽपि न्यायसुधोदाहरणपर्यालोचनेन सम्भावितस्य टुप्टीकापूर्वभागस्य एतत्सर्वदर्शनकौमुदीदर्शनेन निश्चयेऽपि विधिरसायनोक्तविषयाणामद्यतनटुप्टीकायामदर्शनेन न वयं तत्र संशयमतिवर्तामहे । विधिरसायन एव क्वचिदभिहितस्य (२६ पुटे) विषयस्याद्यतनटुप्टीकायां दर्शनात्तु (१४० पुटे) अन्यथात्वनिश्चयमपि न कर्तुं शक्नुमः ।

शाबरभाष्यसङ्ग्रहरूपो मीमांसानुक्रमणीत्यपरोऽपि कश्चिद्ग्रन्थो मण्डनेन कृत इति वदन्ति । (कर्ममीमांसा ११ पु.) भाट्टालङ्कारेऽनन्तदेव आह ' एवमेव ह्यवादि भावनाविवेके महामुद्गलभट्टैः ' इति । भावनाविवेको नाम ग्रन्थो मण्डनमिश्रकृत इति वयं जानीमः । स एव चेदयं भावनाविवेकस्तर्हि मण्डनस्य महामुद्गलभट्ट इति नामान्तरमासीदिति मन्तव्यं भवति ।

वर्तमानकुमारिलग्रन्थत्रये प्रथमस्य श्लोकवार्तिकस्य न्यायरत्नाकरेण तृतीयस्य टुप्टीकाभिधानस्य तन्त्ररत्नेन च व्याख्यानत्वात् पारिशेष्यात् पार्थसारथेर्न्यायरत्नमालां कुमारिलग्रन्थत्रये मध्यमस्य तन्त्रवार्तिकस्य प्रकरणग्रन्थत्वेनायं सर्वद-

र्शनकौमुदीकारो मन्यत इति प्रतीयते। वस्तुतस्तु न तथेति न्यायरत्नमालास्वरूपपर्यालोचनाज्ज्ञानीमः ( अत्र 48 पुटे द्रष्टव्यम् )। यदपि शास्त्रदीपिकामेष सर्वदर्शनकौमुदीकारो मीमांसाशास्त्रस्य प्रकरणं मन्यते तत्रापि न वयमौचितीं पश्यामः। स हि ग्रन्थसन्दर्भः प्रकरणमित्युच्यते यत्र, शास्त्रे निरूपितानां केषाञ्चिद्विषयाणामनतिविस्तरेण प्रतिपादनं क्रियते। तदाह काव्यमीमांसायां ( 5 पुटे ) राजशेखरः शास्त्रैकदेशस्य प्रक्रिया प्रकरणम् इति।

सर्वदर्शनकौमुदीकारो माधवसरस्वतीति उव्वेकस्य श्लोकवार्तिकव्याख्यानमुपलब्धमिति तदिदं उव्वेकजयमिश्राभ्यां द्वाभ्यां विरचितमिति सोयं जयमिश्रः कुमारिलपुत्र इति वदन्तीति एतद्व्याख्यानोपक्रमस्थश्लोको मालतीमाधवे दृश्यते इति च पण्डित. एस्. के. रामनाथशास्त्री क्वचिल्लिखति।

---

मल्लिनाथकृतस्य तन्त्रवार्तिकव्याख्यानस्य सिद्धाञ्जनमिति नामधेयमिति कमलाशङ्करप्राणशङ्करीये प्रतापरुद्रीयोपोद्घाते दृश्यते [P. XXIV]।

---

अधिकरणपदस्य विचारो विमर्शः परीक्षेत्यर्थ इति डार्. गङ्गानाथ जा (S. V. T. ii)। वस्तुतस्त्वस्य पदस्य घटाधिकरणं भूतलमित्यादाविव पतनप्रतिबन्धकरूप आधारो मुख्यार्थः। तथाऽपितूपचारात् यमर्थमाश्रित्य विचारः प्रवर्तते

तत्राप्यधिकरणव्यवहारः। यथाऽऽधारमन्तराऽऽधेयस्य स्थितिर्न भवतीति आधारोऽधिकरणम् तथा विषयमन्तरा विचारो न सम्भवतीति विषयोऽप्यधिकरणमुच्यते। एवं विषयार्थोऽयमधिकरणशब्दो वेद एवोपलभ्यते। यथा तैत्तिरीयोपनिषदारम्भे

अथातस्संहिताया उपनिषदं व्याख्यास्यामः। पञ्चस्वधिकरणेषु। अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम्। इति।

अत्र शाङ्करं भाष्यम्

पञ्चस्वधिकरणेषु आश्रयेषु ज्ञानविषयेष्वित्यर्थः। इति।

एवमुपचारेण विषयमात्रस्याधिकरणत्वे सति पुनर्लक्षणया विषयादिसमुदायस्याधिकरणत्वव्यवहारः प्रवृत्त इति भाति। शैवभाष्यकारः श्रीकण्ठस्तु आधारपरमेवात्राप्यधिकरणपदं व्याख्याति। यदाह जिज्ञासासूत्रव्याख्यानारम्भे

विषयसंशयपूर्वपक्षसिद्धान्तनिर्णयसङ्गतीनामाधारत्वमिहाधिकरणत्वम् इति

तत्र विषयाद्यवयवव्यतिरिक्तं तदाधारभूतं किमत्रास्तीति चिन्तनीयम्।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः। निर्णयश्चेति पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः॥

इत्यसकृदुदाह्रियमाणं श्लोकमनुसृत्यायं भाष्यकार एव-मधिकरणावयवान् निर्दिशतीति प्रतीयते । तत्र श्लोकस्थस्योत्तरशब्दस्य उत्तरः पक्ष इत्यर्थः । स च सिद्धान्तः । सिद्धांतश्च नाम निर्णयो वा निर्णीतः पक्षो वेति पुनः पृथक् निर्णयश्चेति वचनमसङ्गतमिति भाति । तदिदमभिप्रेत्य उदाहृतभाष्यव्याख्यानावसरे शिवार्कमणिदीपिकायामप्पय्यदीक्षितो निर्णयपदस्य द्वेधा गतिमाह (21—22 पु) ।

अनवधारणेनापि क्वचित् पूर्वपक्षस्सम्भवति । सिद्धान्तस्तु निर्णयावसान एवेति सिद्धान्तनिर्णयेत्युक्तम् इति ।

एतेन श्लोके उत्तरो निर्णय इति सामानाधिकरण्येनैकार्थप्रतिपादनमिति दर्शितं भवति । अत्र पञ्चाङ्गत्वभङ्ग इति पक्षान्तरम्

तदुभयसङ्ग्रहार्थं वा निर्णीयते नितरां प्राप्यत इति व्युत्पत्त्या निर्णयशब्देन प्रयोजनं विवक्षितम् इति ।

एतेन श्लोके निर्णयशब्दः प्रयोजनपर इति दर्शितम् । एवं विषयविशेषमुपादाय विमर्शपुरस्सरं पक्षप्रतिपक्षनिरूपणाभ्यां विचारस्य क्रियमाणत्वादेव प्राड्विवाकनिर्धारणीयलौकिकव्यवहारस्थानस्याप्यधिकरणसंज्ञेति मन्तव्यं भवति । शास्त्रेष्वपि न केवलं मीमांसायां अन्यत्रापि तु विषयविशेषानधिकृत्य विचारे प्रवर्तमानेऽधिकरणव्यपदेशः कामं युज्यते । अत एव न्यायभाष्ये वात्स्यायनोऽप्याह (2—2—18)....

शीलमिदं भगवतस्सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयति इति ।

आलङ्कारिको वामनोऽपि निजमलङ्कारसूत्रमधिकरणात्मना विभजते । परन्त्वन्यत्र अध्यायस्य चरमावयवोऽधिकरणमिति स्थितेऽस्मिन्नलङ्कारसूत्रेऽधिकरणमवयवि कृत्वा तदवयवोऽध्यायः कृत इति विशेषः । एवमधिकरणव्यपदेशः काव्यमीमांसायामपि दृश्यते ।

---

प्रमाणप्रस्तावे प्राभाकरमतमुपक्रम्य कीत् लिखति

The mode in which cognition is known is inference.

( संविदो ग्रहणमनुमानेन ) इति । (कर्ममीमांसा २० पु)

तदिदं, प्राभाकराभिमतं संविदां स्वयम्प्रकाशत्वं तेन न सम्यक् गृहीतमिति ज्ञापयति । स्वयमेव पूर्वं स्वयम्प्रकाशत्वमुक्त्वा ( which is self-illumined ) यदनन्तरमेवानुमेयत्वमाह तदत्यन्तपरिहास्यम् । तस्यैवं भ्रान्तेः कारणं चिन्तयतो मे यत् प्रकरणपञ्चिकायां (६३ पु) शालिकनाथ आह 'अपि च ज्ञानमनुमेयमिष्यते' इति तदेवेति भाति । संविदां स्वयम्प्रकाशत्वमुपपादयितुं माध्यस्थतया चरमं युक्त्यन्तरं प्रदर्शयन् शालिकनाथ एवमुक्त्वा ज्ञानपदस्य कोऽर्थ इत्यनभिधायैव अनुमेयस्य ज्ञानस्यानुमापकमर्थज्ञानं तस्य च स्वयंप्रकाशत्वमन्तरा ज्ञानानुमापकत्वं न सम्भवतीति स्वसम्मतं संविदः स्व-

यम्प्रकाशत्वं प्रसाध्य नन्वेवं संविदित्युच्यमानस्य ज्ञानस्य स्वयंप्रकाशत्वेऽनुमापकत्वे च ज्ञानमनुमेयमिति कथमुच्यते । न खल्वेकमेवानुमापकमनुमेयञ्च न च खल्वेकस्यैव स्वयम्प्रकाशत्वमनुमेयत्वञ्चेत्याशङ्कां परिहरन्निदमाह

किं तर्ह्यनुमीयते । ज्ञानम् । ननु न तत् संविदः स्वयम्प्रकाशाया भिन्नमुपलभ्यते । सत्यं अत एवानुमीयते । ननु किं तदिति न तद्विद्मः । संविदुत्पत्तिकारणमात्ममनस्सन्निकर्षाख्यं तदित्यवगम्य .... इति ।

तदत्रानुमेयतयोक्तं ज्ञानं ज्ञायतेऽनेनेति व्युत्पत्त्याऽऽत्ममनस्सन्निकर्ष इति शालिकनाथो मन्यते न संविद्रूपस्य ज्ञानस्यानुमेयत्वमिति ।

---

भाष्ये वृत्तिकारमतेन कृतं निरालम्बनवादं शून्यवादंच संगृह्य तदनन्तरं कीत् लिखति ( कर्ममीमांसा ४६ पु )

सोयं वाद एवं द्विभागो भवति । तत्र प्रथमः प्रत्यया निराधाराः ( have no foundation—निरालम्बनाः ) इत्याक्षेपनिराकरणपरः । द्वितीयो बाह्यार्थः शून्य इत्येतन्निराकरणपर इति । द्वावपीमौ बौद्धेषु सर्वशून्यवादिनां (माध्यमिकानां ) आक्षेपौ । एतन्निराकरणायैव वृत्तिकारग्रन्थप्रवृत्तिरित्यत्र नास्ति संशयितुमवसरः । तथा सत्यपि कुमारिलः ततः प्राचीनो वा कश्चित् एतं ग्रन्थमन्यथा व्याचख्यौ । प्रथमो भागः यत्र बाह्यार्थापलापेन विज्ञानमात्राङ्गीकारः

तादृशवसुबन्धुप्रवर्तितविज्ञानवाद (योगाचार) विषय इति । द्वितीयो नागार्जुनप्रवर्तितमाध्यमिकीयशून्यवादविषय इति । इति ।

अत्र निरालम्बन इत्यत्र आलम्बनपदं foundation इति विवृण्वतः कीत्-अस्याभिप्रायं न विद्मः । वस्तुतस्तस्य विषय इत्यर्थः । निरालम्बनो निर्विषयः विषयशून्य इति । 'शून्यस्तु' इत्यत्रापि भाष्ये 'ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः' इति पूर्वतः प्रत्ययपदानुषङ्गेण प्रत्ययः शून्यः निर्विषयः विषयशून्य इत्येवार्थः । तेनोभयत्रापि बाह्यार्थसाधन एव क्रियमाणे यत् कीत् विषयभेदं कल्पयति तदप्रमाणकम् । कुमारिलोऽप्युभयत्रैकमेव पूर्वपक्षिणं मत्वा व्याख्याति न तु पूर्वत्र योगाचारं उत्तरत्र माध्यामिकञ्च पूर्वपक्षिणं कृत्वा । निरालम्बनवादः शून्यवाद इति वादभेदव्यवहारस्तु शब्दभेदमात्रनिबन्धनः नार्थभेदः कश्चित् । यद्येक एवोभयत्र पूर्वपक्षी विषयश्चैक एव तर्हि तस्मिन् पूर्वभागेन निरस्ते पुनरुत्तरभागारम्भः किमर्थ इति शङ्कां स्वयमेव कुमारिलो वारयति

एवमुक्तेऽनुमानस्य ज्ञानमाश्रित्य दूषणे ।
ज्ञानप्रवृत्त्यशक्त्या तु परः प्रत्यवतिष्ठते ॥

इति । अत्रेमा न्यायरत्नाकरपङ्क्तयः—

अत्र भाष्यं....शून्यस्तु । कथम् । अर्थज्ञानयोराकारभेदं नोपलभामहे ।

नाम न किञ्चिदस्तीति पश्यामः -- इति । तदयुक्तम् । अत्र प्रकृतप्रत्ययशब्दानुवृत्त्या प्रत्ययः शून्य इत्युच्यते । किञ्चेदं प्रत्ययशून्यत्वमन्यतोऽर्थविरहात् । तथा समाम्नावुपसंगृहीतं 'अर्थरूपं न पश्यामः' इति । तेनार्थानालम्बनत्वमेवेदमुच्यते । तच्च निरस्तम् । अतः केन हेतुना पुनः प्रत्यवस्थानम् । अत आह एवमिति । प्रत्यक्षादिज्ञानविरोधेन हि प्रागनुमानं निरस्तम् । तस्य च बहिः प्रवर्तितुमशक्तेर्न तद्विरोधोऽनुमानस्य सम्भवतीति पूर्वोक्तविरोधपरिहारेण प्रत्यवस्थानमिति ।

**एवमत्र भागद्वयेऽपि पूर्वपक्षिण एकत्वे सति स किं योगाचार उत माध्यमिक इति शङ्कायां बाह्यार्थापलापस्योभयसाधारणत्वादुभावपि भवितुमर्हत इति कुमारिलाभिप्रायः प्रतीयते (श्लो. वा. निरालम्बनवादकारिका 14—16)। तथाऽपि माध्यमिके निरस्ते योगाचारनिरासस्य कैमुतिकन्यायसिद्धत्वात् माध्यमिकमात्रस्य पूर्वपक्षित्वं युक्तमिति मन्वानः पार्थसारथिः शास्त्रदीपिकायां (निर्णयसागरस्य) तर्कपादे (50 पु) 'ननु सर्वएव निरालम्बन इत्यादिना .... .... शून्यवादी प्रत्यवतिष्ठते' इति, (52 पु) 'शून्यास्त्वित्यादिना स एव शून्यवादी पुनः प्रत्यवतिष्ठते' इति चाह । तस्मादत्र क्वीत् अस्य विषयभेदकल्पनं कुमारिलः पूर्वपक्षिद्वयाभिप्रायेण ग्रन्थं व्याचख्याावित्यभिधानञ्च चिन्तनीयम् । अत्र मे भाति कुमारिलः पूर्वसमादन्यं पूर्वपक्षिणं कृत्वा 'शून्यस्तु' इति**

भाष्यग्रन्थं व्याख्यातीति यत् कीत् मन्यते तत्र कारणं डार्. गङ्गानाथ जा-अस्य भाषान्तरानुवादः । अयं हि 'परः प्रत्यवतिष्ठते' इतीदम्

another (scion of the Bauddha) comes forward इत्यनुवदति (S. V. T, p 148) । वस्तुतस्तत्र 'परः' इत्यस्य पूर्वस्मादन्य इति नार्थः । किन्तु प्रतिपक्षीति ।

---

मीमांसायां बहुषु पदार्थेषु दुर्ग्रहेषु अयमत्यन्तं दुर्ग्रहो भाति यो भावनापदेनाभिधीयते । तत्रापि मीमांसापरिभाषायां कृतश्शब्दभावनाविचारो येषां हृद्गतः, मन्ये, अत्यन्तं ते विरलाः । तदिदमधिकृत्य पारिष्कारः अक्षरार्थ इत्यस्मदीयं मीमांसापरिभाषाया व्याख्यानद्वयं द्रष्टव्यम् । तत्रायमक्षरार्थस्थः (108 पु) अर्थभावनानिष्कर्षश्लोकः ।

आख्यातवाच्योऽथ कृतिः प्रयत्न इ-
त्युदीर्यमाणो गणितो गुणेषु च ।
पाकादिहेतुः पुरुषात्मनि स्थितो
व्यापार एवाभिहितोऽर्थभावना ॥

अयन्तु तत्रैव (113 पु) शब्दभावनानिष्कर्षश्लोकः ।

पुरुषप्रवृत्तिजनको वैदिकलिङ्व्यक्तिरपि च लिङ्वाच्यः ।
आचार्येच्छासदृशो व्यापारः शब्दभावना नाम ।

---

मीमांसान्यायानां सन्दिह्यमानार्थेषु वाक्यान्तरेषु सञ्चारे कर्तव्ये पण्डितैर्बहु जागरूकैर्भवितव्यमिति प्रदर्शनाय लिखितः पत्रिकासु प्रकटितश्चायं लेखः मीमांसायामवधेयान् बहूनंशानावेदयतीति अत्रान्ते संयोज्यते ।

## ॥ मीमांसान्यायसञ्चारः ॥



इह खलु प्रमाणमिति आन्वीक्षकीति प्रसिद्धं न्यायदर्शनमवलंब्य शून्यवादिप्रभृतिषु परिपन्थिषु निरस्तेषु अङ्गविशेषावधारितवर्णपदपदार्थस्य अनन्यप्रमाणकं धर्मं प्रमापयितुं प्रवर्तमानस्य सकलपुरुषार्थनिदानभूतस्य भगवतो वेदपुरुषस्य सहकारिणी विंशतिलक्षणी मीमांसा जैमिनिबादरायणाभ्यां जैमिनिकाशकृत्स्नबादरायणैर्वा जगदनुग्रहाय प्रणीतेति वैदिकपद्धतिविदां विदितम् । तत्र यथा ब्रह्मकाण्डे व्याख्यातॄणां कलहबहुला दृष्टिभेदाः सिद्धान्तभेदाश्च तथैव कर्मकाण्डेऽपि । अन्यो हि कौमारिलानां पन्थाः अन्यः प्राभाकराणाम् । तत्रत्वयं विशेषः ब्रह्मकाण्डे सूत्रमात्रं सर्वसिद्धान्तसाधारणम् । नतु किञ्चित् तद्विवरणं सर्वाश्रितमिदानीमुपलभ्यते । कर्मकाण्डेतु यथा सूत्रं तथा शाबरं भाष्यमपि गुरुकुमारिलप्रस्थानद्वयसाधारणम् । अस्ति त्वाभ्यामुभाभ्यामप्यन्यादृशी सेश्वरमीमांसकानां सरणिः ।

तत्र शालिकनाथो भवनाथो वरदराज इत्येवमादिभिः ऋजुविमला नयविवेकस्तद्विवरणमित्येवमादिग्रन्थैः प्राभाकरे प्रस्थाने प्रतिष्ठाप्यमाने पार्थसारथिमिश्रः सोमेश्वरः सोमनाथः खण्डदेव इत्येवमादिभिः प्रतिष्ठापितं प्रस्थानान्तरं लोके प्रथिततरमासीत् । एषु

तन्त्ररत्नेन मूलग्रन्थविवरणं शास्त्रदीपिकया न्यायनिबन्धनं न्यायरत्नाकरेण श्लोकवार्तिकव्याख्यानं न्यायरत्नमालया प्रकरणार्थशिक्षणञ्च कुर्वन् पार्थसारथिमिश्रः प्राभाकरखण्डने निर्भरमुवाह । सोमेश्वरस्तन्त्रवार्तिकस्य न्यायसुधां नाम विस्तृतं व्याख्यानं विधाय तस्थौ । सोमनाथश्शास्त्रदीपिकाव्याख्यानमात्रेण विरराम । एवमेतैर्न्यायशिक्षणे दूरं प्रयतितवद्भिरपि शाब्दबोधनिर्णयं प्रति औदासीन्यमवलंबितमालोच्य खण्डदेवः मीमांसाकौस्तुभेन सूत्राणि विवृत्यापि भाट्टदीपिकया न्यायनिबन्धनं कृत्वाऽप्यपरितुष्यन् मीमांसकमतविरोधिनीं नैयायिकवैयाकरणकल्पितां शाब्दबोधप्रक्रियां निरस्य कुमारिलसम्मतां प्रक्रियां स्थापयितुं भाट्टरहस्याभिधानं शाब्दबोधग्रन्थं चकार-यस्य व्युत्पत्तिवादं शब्दशक्तिप्रकाशिकां भूषणं अन्यांश्च प्राचीनग्रन्थान् खण्डितवतो नाद्यावधि कश्चित् प्रबलः प्रतिद्वंद्वी सञ्जातो दृश्यते ।

यदिदानीं शास्त्रान्तरेषु बहुपरिचयवन्तोऽपि प्रमाणभूतानि वाक्यानि स्वयं विविच्य तदर्थमसन्दिग्धं निष्क्रष्टुं न प्रभवन्ति तन्नूनं कौमारिलग्रन्थपरिष्कृतस्य भाट्टरहस्यशेखरितस्य वेदार्थविचारक्रमस्यापरिज्ञानफलम् । प्राचीनेषु ग्रन्थकारेषु न कश्चिदमीमांसको दृश्यते । अत एव तेषां तथा निष्कृष्टं ज्ञानमासीत् । एवं वाक्यार्थनिर्णयकौशलं मीमांसैकसाध्यमभिप्रयन्तो हि मीमांसकं वाक्यविदमाचक्षते । तदिदं मीमांसाशास्त्रं कञ्चित् कालमारभ्यानाद्रियमाणं वैदिकानां धर्मं प्रति परिपूर्णमान्ध्यं फलतिस्म । शास्त्रान्तरवदिदमपि शास्त्रं बाल्यात् प्रभृति यथाक्रममैदम्पर्येणानधीयानाः वेदान्तेषु धर्म-

शास्त्रेषु वा क्वचिद्वाक्यविशेषस्यार्थनिर्णये कर्तव्ये मीमांसाग्रन्थेष्वेकं तदात्वे विलोक्य स्वयं न्यायसञ्चारं कर्तुमारभन्ते । तदिदमेषां विपरीतफलं भवतीति किं वक्तव्यम् । एवं कञ्चिन्न्यायाभासं सञ्चार्य केनचिदाधिकरणिकेन कृतं दुर्निर्णयं तत्रभवान् वेदान्तविशारदोऽनन्तकृष्णशास्त्रिमहाशयः निर्णयसागरप्रकटितशम्भुभट्टीयोपोद्घाते उदाहरति—' नत्वेकं दद्यात् प्रतिगृह्णीयाद्वा सहि सन्तानाय पूर्वेषाम् ' इत्येकपुत्रदानप्रतिषेधः स्मर्यते । अत्र ' स हि सन्तानाय ' इति हिशब्दश्रवणात् ' शूर्पेण जुहोति तेन ह्यन्नं क्रियते ' इत्यत्र हेतुविधित्वानिराकरणपरहेतुवन्निगदाधिकरणन्यायेनार्थवादत्वप्रतीतेर्नेदं वचनमेकपुत्रदानं प्रतिषेद्धुमलमिति निर्णीतम्—इति[1] ।

सर्वथा दुर्निर्णयोऽयमिति नास्ति संशयलेशः । परन्तु मीमांसान्यायानभिज्ञस्य तस्य प्राड्विवाकस्य प्रकृते न्यायनिर्णयप्रकारो यादृशस्तादृश एव मीमांसापण्डितस्य श्रीमतोऽनन्तकृष्णशास्त्रिमहाशयस्य तन्निवारणप्रकारोऽपि नः प्रतीयते । अयं हि लिखति नहि हिशब्दार्थः सर्वत्राविवक्षितः । ' नह्यत्रानूयाजा इज्यन्ते ' इत्यत्र तद्विवक्षाभ्युपगमात् । एवं क्वचिद्विवक्षायां क्वचिदविवक्षायाञ्च एतन्नियामकम् । यत्र हेतोराकांक्षा तत्र विवक्षा इतरत्र नेति । तेन ' चतुरुपभृति ' इत्युक्ते या शङ्का जायते कथं प्रकृताविव नाष्टावुपभृतीति, तन्निरासं कुर्वन् ' नह्यत्रानूयाजा इज्यन्ते ' इति यथा हेतुविधिर्भवति नार्थवादः तथाऽत्राप्येकः पुत्रो न देय इत्युक्ते कथं द्वि-

---

१. वस्तुतस्तु नायं न्यायस्तैरादृत इत्याङ्गलोपोद्घाते द्रष्टव्यम् ।

तीय इव स न देय इति शङ्कायां तन्निरासाय प्रवृत्तः 'स हि स
न्तानाय' इति हेतुविधिरेव नार्थवादः—इति।

अत्रेदं वक्तव्यम्। प्रथमं तावत् यदेष शास्त्रिमहाशयः 'स हि सन्तानाय पूर्वेषां' इत्यत्र हेतुवन्निगदाधिकरणन्यायं सञ्चार्यमाण दृष्ट्वा सहसा तन्निवारणायोत्तिष्ठते सोऽयमस्यापदे सम्भ्रमः। काममत्र मा हेतुविधिर्भूत्। तावता किं प्रतिषेधस्य हीनम्। स खल्वेकपुत्र दानं प्रतिषेत्स्यत्येव। नहि 'स हि सन्तानाय' इत्यस्य केवलार्थवादत्वमङ्गीक्रियमाणं 'नत्वेकं दद्यात्' इत्यस्य एकपुत्रदानप्रतिषेधपरत्वं विहन्तुमीष्टे। प्रत्युत सन्तानाभावप्रसङ्गकृतनिन्दया प्रतिषेधमुत्तभ्नातीति स्पष्टमर्थवादविदाम्। किञ्च हेतुविधित्वाभ्युपगम एवात्र प्रतिषेधार्थमाकुलयति यो यः सन्तानाय सस न देयः एको वा द्वौ वा बहवो वेति। एकवदेव हि सर्वेऽपि पुत्रास्सन्तानाय भवितुमर्हन्त्येव। अस्य तु वारणाय हेतुवन्निगदाधिकरणन्याय एवानुसर्तव्य इति यथा तस्याधिकरणिकस्य प्रकृते तन्न्यायसञ्चारो निरर्थको विपरीतफलश्च तथा शास्त्रिमहाशयस्य तत्प्रतिषेधोऽपीति द्रष्टव्यम्।

अथ यदुच्यते हेत्वाकांक्षासदसद्भावाभ्यां विशेष इति तत्रापि किंचिद्वक्तव्यम्। 'तेन ह्यन्नं क्रियते' इत्यत्र हेतुविधित्वमभ्युपगम्य किं येन येनान्नं क्रियते, शूर्पादन्येनापि दर्वीपिठरादिना, तेन तेनापि होमसिद्धिः प्रयोजनमुच्यते उत शूर्पस्यैव होमसाधनत्वेऽन्नकरणहेतुकत्वं विधीयत इत्युच्यत इति पूर्वपक्षिणं प्रति विकल्पमभिप्रेत्य तृतीयाश्रुत्याऽवगम्यमानं शूर्पस्य करणत्वं नानुमानिकैर्दर्वीपिठरादिभिर्विकल्पितुमर्हतीति नाद्यः पक्षो युक्तः वेदेनोच्यमानं शूर्पस्य

होमसाधनत्वं न हेतुमपेक्षते वेदस्यैव तत्र प्रमाणत्वादिति नान्त्योऽपि पक्ष इति पूर्वपक्षिणं निरस्य प्ररोचनार्थापेक्षितार्थवादत्वं तु युक्तमिति प्राचीनैस्सिद्धान्तितम् । अयमंशः 'स हि सन्तानाय पूर्वेषां' इत्यत्रापि तुल्यः । शीघ्रपतितमेकपुत्रदानं प्रतिषिध्य नानुमानिकं द्वितीयादिदानप्रतिषेधं कर्तुमर्हति । नापि वचनत्वात् एकपुत्रदानप्रतिषेधे हेत्वन्तरमपेक्षत इति । यदित्वेवमप्यत्र हेत्वाकांक्षाऽस्तीत्युच्यते तर्हि 'तेन ह्यन्नं क्रियते' इत्यत्रापि वक्तुं शक्यम् । कथं शूर्पार्थवंशांकुरसेचनसाधनीभूतकुम्भादिषु सत्सु शूर्पमात्रेण होमः कर्तव्य इति । विध्यपेक्षितप्राशस्त्याकांक्षैवेयमिति चेत् निषेधापेक्षितनिन्दाकांक्षैव सेति तुल्यम् ।

यदपि परमार्थहेतुविध्युदाहरणतया 'न ह्यत्रानूयाजा इज्यन्ते' इति वचनमुदाहृतं तदप्यविमृश्य । 'नह्यत्रानूयाजान् यक्ष्यन् भवति' इत्येवंरूपं हि वचनमत्र हेतुविधित्वमुपपादयन्तो न्यायसुधाकारादय उदाहरन्ति । न तु 'नह्यत्रानूयाजा इज्यन्ते' इति । विधिरसायनकारस्तु सत्यमेवमुदाहरति । परन्तु परमार्थतस्तस्य हेतुविधित्वं स नाभ्युपैति । किन्तु अर्थवादस्यैव सतः 'न गिरा गिरेति' इत्यस्येवार्थविशेषतात्पर्यग्राहकत्वमात्रमाश्रयति । न हि तावत् तत्र हिशब्दार्थविवक्षेति कृत्वा हेतुविधित्वव्यवहारो मीमांसापरिचयवतां शोभते । किञ्चात्राकांक्षासद्भावमात्रमाश्रित्य हेतुविधित्वकथनमनुचितम् । न हि पुरुषस्याकांक्षामात्रेण शब्दे लक्षणा युज्यते । अतिप्रसङ्गात् । 'न ह्यत्रानूयाजा इज्यन्ते' इति वाक्ये हि उपभृत्याज्यग्रहणकालेऽनूयाजयजनस्याप्रसक्तत्वेन तत्कालवर्त्यनूयाजयज-

नाभावानुवादो नोपपद्यत इति 'न ह्यत्रानूयाजा यक्ष्यन्ते' इति लक्षणा भवेत्। सा च 'तेन ह्यन्नं क्रियते' इतिवदेवानुपपन्नेति। अत एव सोमेश्वरखण्डदेवादयः 'तेन ह्यन्नं क्रियते' इत्यत्र लक्षणाप्रसङ्गेन न हेतुविधित्वम्। 'न ह्यत्र' इत्यत्र तु 'यक्ष्यन् भवति' इति लृट्श्रवणान्न लक्षणाप्रसक्तिरिति हेतुविधित्वं युज्यत इति वैषम्यमुपपादयन्ति नाकांक्षासदसद्भावाभ्यामिति न्यायविद्भिरालोचनीयम्।

अपि च ये हिशब्दश्रवणेन हेतुवन्निगदाधिकरणन्यायप्रवृत्तिं वदन्ति तेभ्यो न्यायविवेकः प्रथमं कर्तव्यः। हिशब्दश्रवणे तद्घटितवाक्यार्थविधानं न युज्यते हिशब्दस्य प्रसिद्धिद्योतकत्वात् किन्तु प्रशंसाद्यर्थमनुवादमात्रमिति 'उपवीती हि देवेभ्यो दोहयति' इति वचनमुदाहृत्य तृतीयचतुर्थे निरूपितो न्यायोऽन्यः। एवं हिशब्दघटितवाक्यार्थस्यानुवाद्यत्वमङ्गीकृत्य तत्र हिशब्दार्थहेतुत्वस्य विधाने क्वाचिदाशङ्किते लक्षणादिप्रसङ्गेन तन्निराकरणपरो हेतुवन्निगदाधिकरणन्यायोऽन्यः। तस्मात् हिशब्दश्रवणात् हेतुवन्निगदाधिकरणन्यायेनार्थवादत्वमिति प्रतिपादनं नातीव युक्तमिति।

तेनैव न्यायाधिपातिना दुर्निर्णीतं वचनान्तरमपि सोऽयं शास्त्रिमहाशय उदाहरति— 'बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः। नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन' इति स्मृतिवचनम्। अत्र पूर्वार्धे बहुपुत्रस्य पुत्रदानं यथा न नियतं बोध्यते तथा उत्तरार्धे एकपुत्रस्य पुत्रदाननिषेधोऽपि न नियतो बोध्यत इति निर्णीतम्— इति। अयमप्यधिकरणिकनिर्णयः पाश्चात्यपद्धतिपरिचयोपहितमती-

नां सविधेऽस्मदीयानां धर्मशास्त्राणां सञ्जातां दुर्गतिं सम्यगवबोधयन् हन्त नो हृदयं तोदमादायेव तुदति । इदन्तु नस्ततोऽप्यधिकतराय खेदाय यदेष शास्त्रिमहाशयोऽपि स्वयं मीमांसकतां परितः प्रख्यापयन् सम्यंचं न्यायमत्र न प्रदर्शयति । अत्रायमेवं लिखति—उभयोरप्यैच्छिकविषयत्वे सपुत्रेण पुत्रदानं कर्तव्यमित्यस्यैव फलितत्वात् वाक्यद्वयमिदं वितथं समापद्येतेति । इदन्त्वनुपपद्यमानमिव दृश्यते । उभयोरप्यैच्छिकत्वे हि एकपुत्रो बहुपुत्रो वा पुत्रं ददातु वा न वा ददातु शास्त्रेण तु न तद्विधीयते न वा निषिध्यत इति फलति । न तु सपुत्रेण पुत्रदानं कर्तव्यमिति । अयमेवात्र श्रीमतोऽभिप्राय इति चेत् धन्यास्स्मः ।

अथ यदुभयोर्विधित्वमभिप्रेत्य पूर्वार्धस्य विधित्वोपपादनाय लिख्यते 'न हि स्वरसतो रागः स्वपुत्रदाने कस्यापि भवतीति पुत्रदानस्यैच्छिकत्ववर्णनं न युक्तं पश्यामः' इति तदनन्तरेणैव 'निषेधो हि रागप्राप्तधात्वर्थविषयस्सर्वत्र दृष्टः' इति स्वलेखनेन विरुध्यते । उत्तरार्धे हि श्रीमदभिमतस्य प्रतिषेधस्य प्रतियोगी रागप्राप्तो वक्तव्यः । पुत्रदानमेवच तत्र प्रतियोगि । तथाच पूर्वार्धस्य विधित्वोपपादनाय बहुपुत्रपुत्रदानस्य रागप्राप्त्यभावं उत्तरार्धस्य प्रतिषेधत्वोपपादनाय एकपुत्रपुत्रदानस्य रागप्राप्तिंच वदन् न्यायवित् कथमव्याहतवादी भविष्यति । 'निषेधो हि न रागप्राप्तस्वविषयः' इत्यप्यनालोच्य यत्किंचिदुच्यते ।

यदप्यत्र निष्कर्षकथनम्—प्रत्येकं वाक्यपरिसमाप्तिः समुदाये वाक्यपरिसमाप्तिरिति न्यायद्वयं लोकसिद्धम् ? एकां व्यक्तिमु-

द्दिश्य कस्यचिद्विधावाधः । समुदायमुद्दिश्य विधौ द्वितीयः । अत्र समुदायघटकेन केनचित् तद्विध्यर्थानुष्ठाने सर्वेऽपि चरितविधयो भवन्ति । यथा बहूनां चोराणां शतरूप्यदण्डे एकेन तस्मिन् दत्ते सर्वे निर्मुक्ता भवन्ति । तथा चानेन न्यायेन एकेन बहुपुत्रेण स्वीये एकस्मिन् पुत्रे दत्ते सर्वेऽपि बहुपुत्राश्चरितविधयो भवन्तीति 'बहुपुत्रेण' इति पूर्वार्धेऽपि नैच्छिकविषयत्वम्—इति तदिदमनुवाचयन्तो न्यायविदः किमेवमपि कश्चिन्मीमांसको लिखेदिति दूरं चित्रीयन्ते । एवं हि सन्ध्यावन्दनेऽप्येकेन जगति क्रियमाणे सर्वे चरितविधयो भवेयुः । नात्र समुदाये वाक्यपरिसमाप्तिरिति चेत् प्रकृते वा तथात्वमस्तीति केनात्रभवत उपदिष्टम् । सन्ध्यावन्दनादिवदेव त्वत्र विधित्वे सत्यपि प्रत्येकमेव वाक्यसमाप्तिरिति न्यायचिन्तारहितानामपि सुगमम् । न हि बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः इत्यत्र समुदायस्य वाचकः शब्दः कश्चिदस्ति येन समुदायस्योद्देश्यत्वमभिधीयेत ।

अथ समुदायोद्देश्यत्वं कृत्वाऽपि चिन्त्यते । समुदायस्योद्देश्यत्वे समुदायिषु प्रत्येकमेव वाक्यपरिसमाप्तिर्भवेत् न समुदितेषु । तत्र हि समुदाये वाक्यं परिसमाप्यते यत्र क्रियामुद्दिश्य समुदायिन उपादीयन्ते । एवं ह्याह 'क्रियाप्राधान्ये तु तद्वशीकृतविशेषणसमुदाये वाक्यपरिसमाप्तिः' इति । अत एव 'समुदायमुद्दिश्य विधौ द्वितीयः' इति श्रीमतो लेखनं केवलं भ्रमादिकम् । एवं समुदाये वाक्यपरिसमाप्तेरुपादेयस्थलमात्रविषयत्वेन तत्र साहित्यस्य विवक्षाऽवश्यम्भावात् सहितैरेव विध्यर्थस्सम्पादनीय इति, समुदाये वाक्यपरि-

समाप्तिस्थले एकेन कृते इतरेण कृतं भवतीति प्रतिपादनं न मीमांसकतां प्रतिष्ठापयितुमलमिति भाति । तथाच श्रीमन्तमेय प्रतिबोधयितुं प्रवर्तमानेनेव वार्तिककारेणारुणाधिकरणान्ते उक्तम् 'समस्तगर्गापादानकं राज्ञा शतं ग्रहीतव्यम्' इति । बहुयजमानके सत्रे एकेन कृतं सर्वैः कृतं भवतीति यत् स्थितम् तद्दर्शनवशात् कदाचिदेवं मतिरुद्भूता स्यात् । तत्र तु विशेषपरिज्ञानाय गुरव उपासितव्याः ।

एवन्तु तस्य वचनस्यार्थः प्रतीयते । पूर्वार्धस्य न भिन्नवाक्यत्वम् । तस्यैव दोषत्वात् । बहुपुत्रं प्रति पुत्रदानस्य पुरुषार्थतया विधाने फलकल्पनापत्तेश्च । दरिद्रस्य बहुपुत्रस्य धनिकायापुत्राय स्वपुत्रदाने बहुशः प्रवृत्तिदर्शनेन विधित्सितस्यार्थस्य प्राप्तत्वाच्च । तस्मादस्यार्थवादत्वमभ्युपगम्य एकवाक्यतया एकपुत्रदानप्रतिषेधमात्रविधिरिति । यस्तु पूर्वार्धस्याविधायकत्वेनोत्तरार्धस्यापि तथात्वं मन्यते स प्रतिबोधनीयः । एकस्यांशस्याविधायकत्वं सन्निहितस्यांशान्तरस्य विधायकत्व एव हेतुर्भवति नाविधायकत्वे । एवमादेर्हि शब्दसन्दर्भस्य विधिप्रतिषेधान्यतरकरणम् वा तदुपकारो वेति कार्यद्वयेऽन्यतरदावश्यकम् । तत्र परत उपकारमन्तराऽपि विधिरुपपद्येत । विधिन्तु विना न तदुपकारकस्यार्थवादस्य प्रयोजनमस्ति । तत्र कृत्स्नं शास्त्रवचनमनर्थकं भवेत् । तन्माभूदिति अर्थवादः सन्निहितस्य विधायकत्वं कल्पयतीति अर्थवादाधिकरणभाष्यादौ स्पष्टम् । एवं विध्यकल्पने हि शास्त्रत्वमेव भज्येत । प्रवृत्तिं वा निवृत्तिं वा कुर्वदेव हि शास्त्रं भवति । न काव्यमिव यत्किञ्चित् प्रतिपादयदिति ।

मीमांसाशास्त्रस्य समुचितप्रचारविरहेण सञ्जातोऽनर्थः कियानिति किञ्चिन्निरूपयितुं प्रवर्तमानैरेतावद्वक्तव्यमासीत्। सेयं मीमांसा एकविद्यास्थानत्वेन ऋषिभिः परिगणिता कर्मदेवताब्रह्मरूपविषयभेदेन काण्डत्रयवती एकं शास्त्रमिति विशिष्टाद्वैतिनः। तत्र 'वेदोऽखिलो धर्ममूलम्' इति कृत्स्नवेदार्थभूते धर्मे प्रमातव्ये 'स्वाध्यायोऽध्येतव्यः' इति विधिविहिताध्ययनप्राप्ते उपनिषदन्ते स्वाध्याये करणभूते तदपेक्षितेतिकर्तव्यताकांक्षां पूरयन्त्या मीमांसायाः साध्यभूतवेदार्थवत् करणभूतस्वाध्यायवच्चावान्तरभेदाविरोधेन प्राप्तमौत्सर्गिकमेकत्वं कर्तृभेदेन वाऽर्थविरोधेन वा प्रकारान्तरेण वा नापोद्यत इति तइमेऽभिप्रयन्ति। अद्वैतिनस्त्वेतन्न मृष्यन्ति। अत्र खण्डनमण्डनेषु प्राचीनैरेव बहुदूरं गतम्। तस्य सर्वस्य परिमितावकाशेष्वेतादृशेषु लेखेषु प्रतिपादनमशक्यमनुचितञ्च। तदिदं पूर्वोत्तरमीमांसयोरैकशास्त्र्यमधिकृत्य काशीमुद्रितशास्त्रदीपिकाभूमिकायां कैश्चिन्मतान्तरनिरासपूर्वकं विस्तरेण लिखितमिति तदकाण्डताण्डवमित्यसम्भवदुक्तिकञ्चेति स एव शास्त्रिमहाशयो निर्णयसागरशास्त्रदीपिकाभूमिकायां 'सुधीरमुद्घोषणं, प्रकटयति। तदिदमुद्घोषणं न्यायविदां सविधे कियत् गौरवमर्हतीति किञ्चित् प्रदर्श्य स्थीयते। धर्मप्रवणं स्वजनं स्वमतञ्च प्रति बहुद्वेषदायिनि कलौ स्वस्वमतविश्वासः प्रार्थनीयः श्लाघनीयश्च। तथाऽपि समीचीनं न्यायं शिक्षित्वा स्वस्वमतोपपादनं क्रियमाणमाह्लादाय भवतीति नो मतिः।

ऐकशास्त्र्यवादिनं प्रतिवदितुं प्रवर्तमान एष शास्त्रिमहाशयः पार्थसारथिमिश्रकृतस्य ग्रन्थस्योपोद्घाते यदुद्घोषणं कर्तुमारभते न

तदस्यौचित्याभिज्ञतामाविष्करोति । प्रथममेव परस्य ब्रह्मणो निर्गुणत्वं निराकर्तुमुपक्रममाण इव दिव्यभूषणायुधमहिषीपरिष्कृतदिव्यमङ्गलविग्रहं परमपुरुषार्थसाधनतया मुकुन्द इति विख्यातं भगवन्तन्नारायणमभिष्टुवन् पार्थसारथिमिश्रः 'तस्मात् ब्रह्मणः प्रशंसार्थैरस्थायित्वेन प्रपञ्चस्यासत्त्वमुपचरद्भिरौपनिषदैर्वादैस्तदनुसारिभिश्चेतिहासपुराणैर्भ्रान्तानां वाक्यतात्पर्यमजानानां न्यायाभियोगशून्यानां प्रलापोऽयमद्वैतवाद इत्युपेक्षणीयः' इति प्रत्यक्षसूत्रे साग्रहमाह ॥

एवंवादिनं ग्रन्थकारमार्यस्सहते । न वा केवलं सहते किन्तु 'पार्थसारथिमिश्रा एवास्माकमुत्तमर्णाः' इति 'मनोरञ्जकेनाद्वैतखण्डनेन पाण्डित्यमभिव्यनक्ति' इति 'अधमर्णान् सर्वान् चरीकरीति' इति 'वयं धन्यधन्या एवेति प्रत्ययामहे' इति च औचित्यानौचित्यविवेचनाशक्त्या वा उपोद्घातं लिखद्भिर्ग्रन्थकारोऽतिस्तोतव्य इत्यानिरूपकोचितेनाभिप्रायेण वा नर्तनमपि करोतीव । एवं ग्रन्थकारकृतं स्वप्रतितन्त्रसिद्धान्तभङ्गमगणयताऽऽर्येण तस्य ग्रन्थस्योपोद्घाते कैश्चित् कथितमैकशास्त्र्यं प्रति कथं तावान् कोपः क्रियते येन न्यायाभासैरपि तस्य प्रतिक्षेपे महान् सम्भ्रमः प्रदर्श्यते । यथा पार्थिवपुरुषैः प्रह्वियमाणो मलिम्लुचः स्वगतं किञ्चित् संलपते पार्श्वस्थाय जनाय कुप्यति तादृगिदं भवति ।

इदमसाङ्गत्यमपि सह्येत यद्युच्यमानं सावधानमालोच्य समी- ...ायपरिकर्मितमुच्येत । अत्रापि तु सर्वं पूर्ववदेवापाततोऽप्यरमणीयं दृश्यते । तथाहि । यल्लिख्यते पार्थसारथिमिश्र उपनिषदां कर्माङ्गभूतकर्तृस्तावकत्वेनैवोपयोगमभिप्रैतीति तत् 'नन्वात्मज्ञानं क्रत्व-

र्थम् । सत्यम् । पुरुषार्थमपि तत् ।' इत्यादिपूर्वोत्तरग्रन्थापरामर्शादिति स्फुटं प्रतीयते । उपनिषदेकदेशस्य कर्माङ्गभूतकर्तृविवेकार्थत्वस्य मीमांसकैरभ्युपगतत्वेऽपि कर्माङ्गभूतकर्तृस्तावकत्वेन तदुपयोग इति न कचिदभिहितमभिमतं वा दृश्यते । तेनैवं लेखनं न केवलं ग्रन्थकाराशयानभिज्ञतां स्तावकार्थवादस्वरूपाविवेकमपितु लेखकस्यावगमयति । यथा 'यन्न दुःखेन' इत्यस्य स्वर्गस्वरूपबोधकत्वमेव न प्राशस्त्यं लक्षयित्वा स्तावकत्वमित्यर्थवादाधिकरणकौस्तुभे स्थितं तथाऽऽत्मस्वरूपप्रतिपादकोपनिषद्भागस्यापीति ग्रन्थकाराणामाशयः प्रतीयते । सर्वेषामेव पूर्वमीमांसकानामुपनिषदं ब्रह्मसूत्राणि च प्रति कोऽभिप्राय इति विस्तरेणान्यदा विमर्शं चिकीर्षन्तो नात्राधिकं ब्रूमहे ॥

यत्त्वार्यस्यानन्तरमुद्घोषणं पूर्वोत्तरमीमांसयोरैकशास्त्र्यमुपवर्णयन्तः श्रीभाष्यकाराः संहितमेतच्छारीरकमिति वदता वृत्तिकारेण प्रतारिता एवेति मन्यामह इति तत्रार्येण बहुधा चमत्कारः प्रदर्शितो भवति । कर्मब्रह्ममीमांसयोः पूर्वोत्तरभावप्रसिद्धिरेव हि नियतक्रमतया तयोरैकशास्त्र्यमशक्यनिह्नवं प्रकाशयति । तत्रैकशास्त्र्यानभ्युपगन्तुस्तयोः पूर्वोत्तरत्वेनानुवादोऽनुवादेऽप्यसमर्थतां प्रकटयति । यदत्रार्येण श्रीभाष्यकाराणां प्रतारितत्वनिर्णयः तन्मशकेन मातङ्गस्य तोलनम् । ग्रन्थेषु सुस्पष्टमभिहितमर्थं यथावदवगन्तुमप्रभवतां जनानां महामातिष्ववतारपुरुषेष्वनार्यं चेष्टितमभिवर्धयन् कलिः कामं विजयत इति, मन्ये, दैवमपि मन्दं हसतीव । यदि भगवान् वृत्तिकारः प्रतारकः, युक्तं प्रमाणशरणैस्तेन प्रतारितैरपि भवितुं न तु स्वातन्त्र्येणापन्यायदुर्युक्तिमूलमाग्रहेण किञ्चिदभिधातुम् ।

यथा उपदेशनिरूपणं पूर्वषट्कस्यार्थः अतिदेशनिरूपणमुत्तरषट्कस्येति विषयभेदः पूर्वोत्तरषट्कयोर्भिन्नकाण्डत्वमापादयितुं न क्षमं किन्तु कर्मनिरूपणस्योभयानुगतत्वेन एककाण्डत्वमेव तथा साध्यविषयः पूर्वकाण्डः सिद्धविषय उत्तर इत्ययं विषयभेदो न पूर्वोत्तरमीमांसयोरैकशास्त्र्यविरोधी किन्तु वेदार्थनिरूपणस्योभयत्रानुवृत्तेरेकशास्त्रत्वमेवेति परपक्षः। तत्र 'वेदार्थो हि सिद्धसाध्यभेदः स्वविषययोर्विचारशास्त्रयोर्द्वैविध्य एवोपपद्यते' इत्यार्यो लिखति। अत्र पदपङ्क्तिस्वारस्यं तावदस्तु। अनेन परपक्षं प्रति किमुक्तं भवतीति मध्यस्थैर्विवेक्तव्यम्। यथा कर्मनिरूपणार्थतया पूर्वोत्तरषट्कयोरेककाण्डत्वं तथा वेदार्थनिरूपणार्थतया पूर्वोत्तरमीमांसयोरेकशास्त्रत्वमिति प्रतिपादयत् 'अर्थैकत्वात्' इति सूत्रमपन्यायमूलमहामोहजलधौ मज्जतां दूरतरं मज्जनाय शिरसि हस्तं ददाति नत्ववलम्बनाय हस्ते हस्तं ददातीति पश्यामः। यदि हि पूर्वोत्तरमीमांसयोरनुगत एकोऽर्थो न स्यात्तर्हि अर्थैकत्वाभावादेकशास्त्रत्वन्नभवितुमर्हतीत्येतत्सूत्रबलेन वक्तुं युक्तम्। स पुनरस्तीत्युक्तम्॥

यदपि लिख्यते 'वेदार्थविचारत्वेनोपाधिना एकशास्त्रत्वे कल्पसूत्रगृह्यादिभिरपि तदापत्तिः। युक्त्यात्मकविचारत्वाभावेन तत्र भेदसाधने प्रकृतेऽपि साध्यवेदार्थविचारत्वाभावेन तत्र भेदसिद्धिरिति निर्णयामः' इति तदपि रहसि विलिख्य मुद्रणात् न कश्चित् प्रतिद्वंद्वी भविष्यतीति धैर्यमात्रेणानालोच्य लिखितमिति प्रतीमः। वेदार्थविचार उभयत्र क्रियत इति तेषां पक्षः। सोऽयं निह्नोतुं न शक्यते।

न्तरभेदः सिद्ध्यति नात्यन्तभेद इति किमिदमार्यस्य बुद्धिमेव नाधिरोहति उत तत्प्रतिक्षेपानुगुणन्यायास्फुरणात् यथावदनुवदितुमार्यो नेच्छतीति संशेमहे । कल्पसूत्रादिभिरेकशास्त्रत्वापादनमार्यस्य विचारशब्दार्थ एवापरिज्ञात इति ग्राहयति । न हि कल्पसूत्रादिषु वेदार्थो विचार्यत इति वदन् कश्चित् दृश्यते । 'युक्त्यात्मकविचारत्वाभावेन' इति वदन्नत्रभवान् विचारशब्दस्य प्रतिपादनाद्यर्थान्तरवाचित्वमप्यभिप्रैतीति भाति । तत्त्वप्रसिद्धमिति शब्दार्थविदो विदन्ति । 'युक्त्यात्मकविचार' इत्यपि व्याहतम् । न हि युक्तिर्विचारः किन्तु युक्त्यनुसन्धानम् ।

'अन्यथा बौद्धवैशेषिकादितन्त्रसिद्धस्याऽप्यर्थस्योपजीव्यत्वेन बौद्धादितन्त्रैरप्येकप्रबन्धतापत्तेः' इति दूषणमपि मीमांसकेन क्रियमाणं न युज्यते । बौद्धतन्त्रोपजीवित्वं मीमांसायाः को नु वैदिकस्सन् सम्मन्येत । अत्र पदार्थप्राबल्याधिकरणस्य वार्तिककारीयं वर्णकान्तरं श्रीमन्तं स्मारयामः यत्रावैदिकानां ग्रन्थानामनादरणीयत्वं स्थाप्यते । वैशेषिकतन्त्रस्याप्यनपेक्ष्यत्वं 'अपरिग्रहाच्चात्यन्तमनपेक्षा' इति भगवता बादरायणेन प्रतिपादितं न वेदान्तविशारदो विस्मर्तुमर्हति ।

अपरमिदमार्यमिश्रस्य लेखनं येन मीमांसकत्वं सुस्पष्टं ख्याप्यते। 'नापीयं सूत्रशैली दृष्टचरा ? यत् समान एव तन्त्रे सूत्रितो न्यायविशेषो निदर्शनार्थं पुनस्सूत्रान्तरेण परामृश्यत इति' इति । एवं लिखता शास्त्रिमहाशयेन यदुच्यते मीमांसाध्येतारस्सम्प्रति सूत्रकथावैदेशिका इति तत् सत्यापितं भवति । कर्मकाण्डे हि सूत्रका-

रोऽधिकरणान्तरे सूत्रितं न्यायमधिकरणान्तरे बहुशः परामृशति। यथा 'उक्तन्तु वाक्यशेषत्वं' इत्यौदुम्बराधिकरणेऽर्थवादाधिकरणन्यायम् 'उक्तं समाम्नायैदमर्थ्यं' इति नामधेयाधिकरणे तद्भूताधिकरणन्यायं पौर्णमासीवदुपांशुयाजः स्यात्' इति उपांशुयाजाधिकरणे 'प्रकरणन्तु पौर्णमास्याम्' इति सूत्रोपक्रान्तविद्वदधिकरणापरपर्यायपौर्णमास्यधिकरणन्यायम् 'आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत' इत्याग्नेयाभ्यासाधिकरणेऽभ्यासाधिकरणन्यायं 'अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे' इत्यभ्युदितेष्ट्यधिकरणे 'पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात्' इति पञ्चशरावाधिकरणन्यायञ्चेति। ब्रह्मकाण्डेपि 'जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातं इति जगद्वाचित्वाधिकरणे 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इतीन्द्रप्राणाधिकरणसूत्रोक्तन्यायं 'अल्पश्रुतेरिति चेत्तदुक्तं' इति दहराधिकरणे 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' इति सर्वत्रप्रसिद्ध्यधिकरणसूत्रोक्तन्यायञ्च भगवान् सूत्रकारः परामृशति। अत्र कार्त्स्न्येनोदाहरतोऽतिविस्तर आपद्यतेत्युपरि गम्यते।

'स्मर्तृभेदोऽप्यत एवोपपद्यते' इति लिखन् सोऽयं शास्त्रिमहाशयः जैमिनिबादरायणौ पूर्वोत्तरमीमांसयोस्स्मर्तारौ मन्यत इव। नैतदुचितमिति भाति। नहि मीमांसायाः स्मृतिरिति व्यवहारः क्वचित् दृश्यते। यत्र वैदिकवचनादुपलभ्यार्थविशेषो निबध्यते तत्र शब्दानुभवपूर्वकत्वात् स्मृतित्वव्यवहारः। अत्र तु प्रमाणानुग्राहकस्तर्कः परीक्ष्यते। तेन स्मर्तृभेद इति व्यवहारो भ्रमात् प्रमादाद्वेति प्रतीयते।

मीमांसान्यायनिरूपणादरस्य जगत्यावश्यकतां परितः प्रथयितुमुपक्रम्य स्वयमेव समीचीनन्यायशिक्षणेऽनादरं कृत्वा एवं बहुव्याहतं न्यायविरुद्धं न्यायाभासमूलकञ्च प्रतिवचनसम्भ्रमेण यथोपस्थितमनालोच्य लिखन्नार्यमिश्रः परिहासमेव मीमांसकानां सम्पादयतीति महानस्माकं खेदः। तदेतत् प्रतिबोधयितुमथमस्मदीयो यत्नः न स्वमतं यथावदनवगतदूषितं प्रतिविधातुं यतः प्राचीनैरेवास्मिन्विषये तथा पराक्रान्तं यथा तत्सर्वमस्माभिरवगन्तुमेव न शक्यं किमुताक्षेपमुद्रां कर्तुम्। सर्वदा तु नश्चिन्ताकुलं चेतः किं पुनरपि स कालो भविता यत्र कूलङ्कषेण पाण्डित्येन हृदयङ्गमेन वाक्कौशलेन धारणशक्त्या मेधया सर्वशास्त्रार्थवेदनक्षमया प्रज्ञया अप्रमादरमणीयेन लेखनेन प्रमाणातिलंघनभयशालिनाऽऽस्तिक्येन च न केवलमात्मानं जगदेव तु निखिलं भूषयन्तो महात्मान इह जनित्वा धर्मवादमुराभिलं वैदिकं पन्थानं परिष्कृत्यानुग्रहीष्यन्तीति। अयंहि शास्त्रिमहाशयः अनतिविस्तृते भूमिकालेखने कांक्षन्तीति वक्तव्ये आकांक्षन्त इति, दृष्टचरीति वक्तव्ये 'दृष्टचरा' इत्यपभ्रंशं, वितथमिति व्यर्थमित्यर्थे प्रत्ययामह इति प्रतीम इत्यर्थेऽवाचकं पदं, तेषां भाष्यमभाषिष्ट शबर इत्यस्य स्थाने अबीभषत् तानि (सूत्राणि) शबर इति दुष्टपदवत् दुष्टवाक्यं बहुधा चावलक्षणानि वाक्यानि प्रयुञ्जानः, दर्शितरीत्या न्यायाभासानुपयुञ्जानश्च शास्त्रार्थलेखनशिक्षणमार्गस्संप्रत्यसंचारमलिनशिथिल इति विशदमवगमयति। अत्रायं भयङ्करः प्रमादः यत् श्वशब्दवाचिनो भषधातोर्णिचि लुङि सिद्धं यत् रूपं सहसा तच्छङ्काप्रदं भाषधातोर्णिचि लुङि विकल्पेन सिद्धं अबीभषदिति

अभाषिष्टेत्यस्य स्थाने प्रयुज्यते । श्रुतिकटुत्वमविगणय्य 'असुसूत्रत्' 'उदमुमूलत्' इति लुङ्प्रयोगवैयग्र्यमत्रापराध्यतीति मन्यामहे । स एष क्रमश्चिरमनुवर्तमानो यथा धर्मविद्यास्थानानामत्यन्तवैयाकुलीं नोत्पादयेत्तथा वैदिकग्रन्थेषु श्रद्धां विशदां प्रज्ञां मीमांसान्यायशिक्षणजनितमप्रकम्प्यं धर्मनिर्णयंच प्रसूतां भगवान् देवाधिराज इत्याशंसामहे ॥

---



॥ श्रीः ॥

# मीमांसानुक्रमणी ।

## (१) ग्रन्थानुक्रमणी ।

श्रीः ॥

# मीमांसानुक्रमणी ।

## ( २ ) ग्रन्थकारानुक्रमणी ।



* उम्वेक उम्बेक इत्यपीदन्नाम लिख्यते ।

# साधारणानुक्रमणी ।

* 'तौतातित' इति तु चिन्त्यमिति भाति ।






TIRUPATI
14605